

# ADVAITA VIJAYAHA - SANSKRIT.

AUTHOR :

## SRI BELLAMKONDA RAMA RAYA KAVINDRULU.

FIRST BOOK PRINTED BY

Sri Dr. Kavitha Venkata Subramanya Sastry.

DIGITALISED BY jan-2011.

Bellamkonda Chakradhar Kumar.Great Grand Son of Sri Rama Raya Kavindrulu.





ADDRESS :

SRI BELLAMKONDA RAMA RAYA KAVINDRA TRUST.

SRI NILAYAM

Do.No:- 12-8-5/5

PRAKASH NAGAR

NARASARAO PET (P o)

PIN – 522 601

GUNTUR (Dt)

ANDHRA PRADESH INDIA.

**CONTACT NO'S : - (+91) 0 9700311109 AND 0 9866400133.**

**NOTE :-** PLEASE TAKE A4 SIZE PRINT PREFARBULE.

# अद्वैतविजयः ।


रचयिता

पण्डित श्री वेल्लङ्कोण्ड रामरायकवीन्द्रः ।



१९५८





[ मूल्यम् १—०—०

श्रीहयग्रीवाय नमः ।

# अद्वैतामृतम् ।

श्लो॥ नत्वा हयग्रीवपदाम्बुजातं धीमन्थनिर्मन्थितवेदसिन्धुः ।
रामो ददात्येतदमत्सरेणाऽद्वैतामृतं भो! विबुधा! भजध्वम् ॥

ननु कथमद्वैतं दातुं शक्यते ? दातृदानदेयत्रिपुटीसत्त्वेऽद्वैतत्व-हानेः । नच ग्रन्थपरत्वाददोष इति वाच्यं, ग्रन्थेनापि कथमद्वैतं प्रति-पाद्येत, प्रतिपाद्यप्रतिपादकभावसम्बन्धस्याप्यद्वैतेऽयोगात् । किंचायं ग्रन्थकारस्स्वयमद्वैतमनुभूय दिशति वा ? उताननुभूय ? आद्ये कवि-कर्तृकानुभवविषयेऽस्मिन्नद्वैते बलादपि द्वैतत्वमापतति- देवदत्तकर्तृकानु-भवविषयाणां घटादीनामात्मकर्तृकानुभवविषयाणां सुखादीनां च द्वैतत्व-दर्शनात् । द्वितीये- स्वेनैवाविदितस्य कथमन्येभ्यो दानम् । न चैवं सर्ववेदान्तशास्त्रस्याप्यप्रामाण्यं स्यादिति वाच्यं, त्वन्मतरीत्याऽप्रामाण्य-स्यास्माकमिष्टत्वात्- अपि चाद्वैतविद्वान् स्वानुभूतमिदमद्वैतं कस्मै दिशति ? द्वितीयस्यैवाभावात्सत्त्वेवाऽद्वैतहानेः । 'तस्मादद्वैतमधिकृत्य तव ग्रन्थारम्भप्रवृत्तिरेव न संजाघटे'तेति द्वैतिनां पूर्वपक्षः ।

**अत्राह कश्चित्**—अद्वितीयपरमानन्दरूपोऽपि परमात्मा भग-वान् कृष्णः यथाऽर्जुनदुःखापनोदनाय गीताशास्त्रं प्रणिनाय तथा कवि-नापि संसारदुःखितशिष्यदुःखापनोदनाय प्रणीतोऽयं ग्रन्थ इति ।

**नन्विदमुन्मत्तप्रलपितम्**—प्रमात्राद्यात्मकसर्वजगन्निषेधेनाद्वि-तीयात्मनः कृष्णस्य कवेर्वा कथं चक्षुषा शिष्यदुःखवीक्षणम् ? कथं वा

वाचा तस्मै तत्ववचनम् ? इदमेवाह हि श्रुतिः- 'तत्केन कं पश्ये'दिति, 'नेह नानास्ति किञ्चन, ऐतदात्म्यमिदं सर्व'मित्यादिः । इति ।

**एवं प्राप्तेऽपर आह**—यावद्देहपातं यस्य कस्यापि नास्ति ब्रह्मापरोक्षज्ञानं, परोक्षज्ञानेन तु न द्वैतबाधः, तस्मात्कृष्णादयस्सर्वेऽपि परोक्षज्ञाः परोक्षमेव ब्रह्मोपदिशन्ति स्वर्गमिवेति ।

**ननु** एवं स्वर्गादिवाक्यज्ञानेन यथा पुरुषस्य न स्वर्गादिसौख्यं तथा तत्त्वमस्यादिवाक्यज्ञानेनापि न ब्रह्मानुभवानन्दः, नापि दुःखनिवृत्तिः, किं च 'स्वयं तीर्णः परं तारये'दिति न्यायात् स्वत एवानिवृत्तदुःखस्य कृष्णादेरर्जुनादिदुःखनिरासाय प्रवृत्तिरपहासास्पदैव । न च परोक्षादपि ब्रह्मज्ञानादस्ति परमानन्दलाभ इत्यभिनिवेशः कार्यः- 'शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षत' इति भागवतात् । अपिच नित्यमुक्तस्य नित्यापरोक्षब्रह्मणोऽस्खलितब्रह्मचारिण ईश्वरस्यापि कृष्णस्य यदि यावद्देहपातसंसारः किंपुनरन्यस्येति विरुद्धमिदं तव वचनं- तथाहि, 'अयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोक' इत्यादिना ईश्वरस्य निस्संसारत्वं श्रूयते, तदैक्यज्ञानेन च जीवानां मुक्तिरिति भवन्मतम् । अधुना तु कृष्णैक्यज्ञानेनार्जुनस्यापि संसार एव पुनः प्राप्तः, न तु मुक्तिः । किंच देहपातानन्तरमात्मसाक्षात्कारो भवतीति वदता भवता किमात्मसाक्षात्कार आत्मनोऽन्यत्वेन विवक्षितः ? यद्वाऽनन्यत्वेन ? आद्ये- य आत्मानं साक्षात्कुर्यात्तस्य विद्यमानत्वेन कथमद्वैतत्वमात्मनः । द्वितीये- साक्षात्कारपदवैयर्थ्यम् । नचैवं देहपातानन्तरमात्मा भवतीति वदाम इति

श्रीहयग्रीवाय नमः ।

# अद्वैतविजयः ।

वादी—अहं ब्रह्मास्मि ।

प्रतिवादी— न त्वं ब्रह्मासि ।

वा—ब्रह्मैवाहमस्मि ।

प्र—जीव एव त्वमसि ।

वा—नाहं जीवः ।

प्र—न त्वं ब्रह्म ।

वा—कुतोऽहं जीवः ?

प्र—कर्माधीनजन्ममरणादिप्रयुक्तसुखदुःखसम्भोगलक्षणसंसारवत्त्वात् ।

वा—कः पुनर्ब्रह्म ?

प्र—श्रीकृष्णः ।

वा—कुतः ?

प्र—पुरुषोत्तमत्वात् ।

वा—तदपि कथम् ?

प्र—सर्वज्ञत्वात्सर्वेश्वरत्वात्सर्वजगदुदयविभवलयहेतुत्वाच्च ।

वा—किमत्र मानम् ?

प्र—साक्षाच्छ्रीकृष्णभगवद्गीता एव । "वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा ॥" इत्याद्याः ।

वा—कृष्णोऽपि वसुदेवाद्देवक्यां जातो मृतश्चेति संसारिजीव एव ।

प्र—मैवं वादीः; मायामानुषविग्रहत्वात्कृष्णस्य । लीलया हि भगवान्भूभारहरणार्थं सङ्कल्पवशाद्वसुदेवाद्भुव्यवतीर्णः ।

वा—लीलया संसरतोऽपि कृष्णस्य कथं ब्रह्मत्वम् ?

प्र—लीलासंसारस्य स्वायत्तत्वेनाऽबन्धकत्वात् ।

वा— यो वसुदेवादवातरत्स कः ?

प्र—उक्तं हि कृष्ण इति ।

वा—जन्मना लब्धसत्ताकस्य हि करचरणादिमत्पिण्डस्य कृष्ण इति नाम विहितं गर्गेण; जन्मनः प्रागवस्थितस्तु मया पृच्छयते क इति?

प्र—श्रीमहाविष्णुः आदिनारायणः कृष्णत्वेनाऽवतीर्णः ।

वा—स च नारायणः कः ?

प्र—परमात्मा ।

वा—कुतः ?

प्र—पुरुषोत्तमत्वात् ।

वा—तच्च कथम् ?

प्र—गीतावचनात् । "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर" इति ।

वा—किंरूपस्स नारायणः ?

प्र—शङ्खचक्रगदाधरः, पुण्डरीकाक्षः, श्रीमहालक्ष्मीसमेतः, पद्मनाभश्च, वैकुण्ठनामकपरमपदनिलयः ।

वा—कथमस्य लोकत्रयप्रवेशः ?

प्र—सूक्ष्मरूपेण ।

वा—कथं स्थूलस्य तस्य सूक्ष्मत्वं नारायणस्य ?

प्र—गगनवत् ।

वा—सर्वव्यापित्वाद्गगनस्य भवतु सौक्ष्म्यं; कथं पुनः परमपद-निलयस्य नारायणस्य सौक्ष्म्यम् ?

प्र—'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुत्या नारायणस्य सर्वव्यापित्वोपपत्तेः ।

वा—श्रुत्युक्तत्वमात्रेण कथं मध्यमपरिमाणस्य नारायणस्य सर्वव्यापित्वमवगन्तुं शक्यं प्रत्यक्षादिविरुद्धम् ?

प्र—नारायणस्य विराड्रूपेण सर्वव्यापित्वात्; सर्वात्मकं हि विराड्रूपम् ।

वा—हन्त ! विचित्रमिदं यदेकस्यैव महन्मध्यमाणुपरिमाण-त्रयवत्त्वम् ।

प्र—नैव विचित्रं विचित्रशक्तावीश्वरे ।

वा—यस्य स्थूलमध्यसूक्ष्मरूपाणि त्रीणि सन्ति स कः ?

प्र—उक्तं हि नारायण इति ।

वा—किं तस्य स्वरूपम् ?

प्र—उक्तमेव शङ्खचक्रेत्यादिना ।

वा—नैवोक्तम् । तद्धि विग्रहस्वरूपं; मया तु यस्य तद्विग्रह-स्तत्स्वरूपं पृच्छ्यते ?

प्र—सर्वज्ञत्वसकलकल्याणगुणनिलयत्वादिकम् ।

वा—तद्धि धर्मजातम् ?

प्र—तर्हि ज्ञानमेव स्वरूपं; ज्ञानस्वरूपं, ज्ञानगुणकं हि ब्रह्म । 'सत्यं ज्ञान'मित्यादिश्रुतेः ।

वा—तर्हि ज्ञानस्वरूपो ज्ञानगुणकश्च जीवोऽपि ब्रह्मैव ।

प्र—नैवमपरिच्छिन्नस्यैव ब्रह्मत्वाद्ब्रह्म हि पूर्णम् ।

वा—कथं तर्हि परिच्छिन्नस्य वासुदेवस्य कृष्णस्य ब्रह्मत्वम् ?

प्र—कृष्णविग्रहस्य परिच्छिन्नत्वेपि तदन्तर्गतस्य ज्ञानस्वरूपस्य व्यापित्वात् ।

वा—कथं ज्ञायते ज्ञानस्वरूपत्वे समानेऽपि कृष्णशरीरान्तर्गतः परमात्मा, अस्मदादिशरीरान्तर्गतस्त्वात्मा जीव एवेति ?

प्र—गुणतः ।

वा—कथम् ?

प्र—यस्सर्वं वेत्ति स परमात्मा, यस्त्वल्पं वेत्ति स जीव इति ।

वा—अनेन हि धर्मभूतज्ञानस्यैव व्यापित्वमवगम्यते ।

प्र—सत्यं, तत एव स्वरूपभूतज्ञानस्यापि । न हि परिच्छिन्नज्ञानस्वरूपः पुमानपरिच्छिन्नज्ञानवान्भवितुमर्हति, तस्माद्यस्य स्वरूपभूतं ज्ञानमपरिच्छिन्नं तस्यैव धर्मभूतं ज्ञानमपीति कृत्वा सर्वज्ञ ईश्वरः कृष्ण एव ब्रह्म ।

वा—कृष्णशरीरपरिच्छिन्नस्य परमात्मनोऽपि कथं व्यापित्वम् ?

प्र—आकाशस्य घटेनेव परमात्मनः कृष्णशरीरेण परिच्छेदायोगात् ।

वा—किं कृष्णशरीर इवाऽस्मदादिशरीरेष्वप्यस्ति परमात्मा ?

प्र—ओम् ।

वा—तर्हि ब्रह्मैवाहमस्मि ?

प्र—नैव त्वं ब्रह्म ।

वा—कस्मात् ?

प्र—तव शरीरे जीवेशौ द्वौ स्तः । 'द्वा सुपर्णा' इत्यादिश्रुतेः । तत्र यो जीवस्स एव त्वं, मनुष्योऽहमित्याद्यभिमानवान् संसारी । यस्त्वीश्वरस्स त्वद्भिन्न एव, स एव ब्रह्मेति ।

वा—किं ममेव कृष्णस्यापि देहे नास्ति जीवः ?

प्र—नास्ति ।

वा—कस्मात् ?

प्र—अनुभवाभावात् ।

वा—तर्हि कथं प्राणधारणं कृष्णशरीरस्य, जीवलिङ्गं हि तत् ?

प्र—ईश्वरसङ्कल्पवशादेव ।

वा—अस्मदादिदेहे जीवेशौ क्व स्तः ?

प्र—हृदि जीवोऽस्ति, जीवे त्वीश्वरोऽस्ति ।

वा—किं परिमाणो जीवः ?

प्र—अणुः ।

वा—किं सावयवाणुरुत निरवयवपरमाणुः ?

प्र—निरवयव एव ।

वा—कथं तत्रेश्वरसत्त्वम् ?

प्र—यथा निरवयवे गगने ।

वा—सावकाशत्वादस्तु गगने ईश्वरः, कथं जीवे ?

प्र—जीवोऽपि सावकाश एव ।

वा—विभुत्वादस्तु गगनस्य सावकाशत्वं, कथमणोर्जीवस्य ?

प्र—गगने घटादिपदार्थस्थित्यर्हमस्ति सावकाशत्वं विभुत्वात्, जीवे तु परमात्मस्थित्यर्हमस्ति सावकाशत्वमणुत्वात् ।

वा—निरवयवं वस्तु सावकाशमिति विप्रतिषिद्धमवयवविश्लेषादेव वस्तुन्यवकाशसम्भवात् ।

प्र—न हि दृष्टेऽनुपपत्तिरिति न्यायान्निरवयवस्याकाशस्य सावकाशत्वदर्शनान्निरवयवजीवस्य सावकाशत्वमुपपद्यते ।

वा—गगननिरवयवत्वस्यासम्प्रतिपन्नत्वात् गगनस्य जन्यद्रव्यत्वेन सावयवत्वात् ।

प्र—'अतीन्द्रियास्तु ये भावा न तांस्तर्केण योजये'दिति न्यायादतीन्द्रियार्थे वेदस्यैव प्रमाणत्वा'द्य आत्मनि तिष्ठ'न्निति श्रुतेश्च निरवयवोऽपि जीवः परमात्मना व्याप्त एव ।

वा—तर्हि सावयव इतीष्यताम् ।

प्र—सावयवत्वे सत्यनित्यत्वप्रसङ्गात् ।

वा—जन्ममरणसंसारवान्हि जीवः ।

प्र—जीवाधिष्ठितशरीरगते एव जन्ममरणे, न तु जीवगते ।

वा—तर्हि जन्ममरणादिषड्भावविकारदूर एव जीवः ।

प्र—ओम् ।

वा—कथमविक्रियस्य संसारित्वविकारः ।

प्र—अविवेकात्, प्रकृतिसंसर्गवशाद् ।

वा—का प्रकृतिः ?

प्र—या देहेन्द्रियाद्याकारपरिणता दृश्यते सा ।

वा—कथमसङ्गस्य प्रकृतिसंसर्गः ?

प्र—प्रकृतौ स्थितिवशात् ।

वा—कथं प्रकृतिस्थस्येश्वरस्य प्रकृत्यसंसर्गः ?

प्र—प्रकृतिविविक्तात्मस्वरूपज्ञानसत्त्वात् ।

वा—कथं चिदचिद्विशिष्टेश्वरस्य प्रकृतिविविक्तत्वम् ?

प्र—दण्डविशिष्टस्य देवदत्तस्य दण्डविविक्तत्ववत् ।

वा—कथमसङ्गेश्वरस्य चिदचिद्विशिष्टत्वम् ?

प्र—चिदचिच्छरीरकत्वात् ।

वा—कथं चिदचिच्छरीरकस्य चिदचिदसङ्गः ?

प्र—घटगताकाशस्य घटरूपादिनेव नेश्वरस्य चिदचित्सङ्गः ।

वा—जीवोऽसङ्ग ईश्वरश्चासङ्ग इति प्रकृतिरप्यसङ्गैव, ससङ्ग-पदार्थान्तराभावात्तथा च कथं जीवस्य प्रकृतिसंसर्गः ?

प्र—अविवेकादित्युक्तमेव ।

वा—कथमविवेकादप्यसङ्गस्य सङ्गित्वम् ?

प्र—कोऽत्र विस्मयः, अविवेकाद्रज्जोरपि सर्पत्वापातात् ।

वा—तर्हि यथा रज्जुः कालत्रयेपि रज्जुरेव, तथा जीवः कालत्रयेप्यसङ्ग एव, तस्य सङ्गित्वं तु भ्रान्तिसिद्धमेव ।

प्र—ओम् ।

वा—कथमियं भ्रान्तिरासीदस्य स्वस्मिन्नपि ?

प्र—भगवन्मायावशात् ।

वा—का माया ?

प्र—भगवत्सङ्कल्पः ।

वा—कुतो भगवतस्तादृशसङ्कल्पः ?

प्र—लीलावशात्, चिक्रीडिषया हि भगवता सृष्टमिदं जगत् ।

वा—कथं भ्रान्तिनिवृत्तिः ?

प्र—भगवत्सङ्कल्पादेव ।

वा—कथं भगवतोऽस्मन्मोचनसङ्कल्पोदयः ?

प्र—अस्मदाराधनोद्भूतदयावशात् ।

वा—कथं तदाराधनमस्माकम् ?

प्र—ईश्वरसङ्कल्पादेव ।

वा—कुतस्तत्सङ्कल्पोदयः ?

प्र—अस्मददृष्टवशात् ।

वा—कथं मन आदिरहितेश्वरस्य सङ्कल्पसिद्धिः ?

प्र—ज्ञानगुणकत्वात् ।

वा—कथमेवं सङ्कल्पादिधर्मसङ्गे सतीश्वरस्यासङ्गत्वम् ?

प्र—स्वस्य स्वधर्मेणसह सङ्गस्यासङ्गत्वाऽभङ्गकत्वात् ।

वा—धर्मः किं धर्मिणोन्य उतानन्यः ? आद्ये- धर्मसङ्गः प्राप्त एव धर्मिणः; द्वितीये धर्मधर्मिभावस्यैवाऽसिद्धिः ।

प्र—धर्मश्शक्तिर्धर्मिणोन्यत्वानन्यत्वाभ्यां निर्वक्तुं नैव शक्यते; यद्वा धर्मिणः पृथगुपलम्भाद्धर्मोन्य एव । नतु तेन ससङ्गत्वं धर्मिणः । तदपृथक्सिद्धविशेषणत्वात् ।

वा—सङ्कल्पादीनामात्मधर्मत्वे, तेषां जन्मनाशवत्त्वेनात्मनस्सविकारत्व स्यात् ?

प्र—नैव स्यात्, स्वरूपविकाराभावात् ।

वा—किमीश्वरसङ्कल्पान्मुक्तो जीवः परमाणुरुत व्यापी ?

प्र—अणुरेव ।

वा—कथं मुक्तस्य सर्वज्ञत्वम् ?

प्र—भगवदनुग्रहात्, धर्मभूतज्ञानस्य हि संकोचविकासौ स्तः।

वा—क्वासौ वर्तते मुक्तः ?

प्र—परमपदे वैकुण्ठे।

वा—किं देही मुक्त उताऽदेहः ?

प्र—यदृच्छया भवति बहुविधः।

वा—कस्तस्येश्वराद्भेदः ?

प्र—सृष्ट्याद्यहेतुर्मुक्तः परिच्छिन्नश्च।

वा—कथमीश्वरोऽपरिच्छिन्नः ? स्वभिन्नचिदचितोस्सत्त्वेन वस्तुपरिच्छेदसत्त्वात्।

प्र—चिदचितोरपीश्वरशरीरत्वादिना ईश्वरापृथक्सिद्धविशेषणत्वेनेश्वरपरिच्छेदकत्वाभावात्।

वा—यदि चिदचिद्भ्यां पृथगीश्वरस्सिध्यति तर्हीश्वरात्पृथगपि चिदचितौ सिध्यत एव।

प्र—कार्यात्पृथक्कारणसिद्धावपि कारणात्पृथक्कार्यं नैव सिध्यति।

वा—'अजो नित्य' इति 'अजामेका'मिति च श्रुतेश्चिदचितो रजत्वेन कथं तयोरीश्वरस्य च कार्यकाणभावः ?

प्र—मूलप्रकृतेरजत्वेपि देहाद्याकारपरिणतकार्यप्रकृतेर्जन्यत्वेन तत्संसृष्टचितोपि जन्यत्वात्।

वा—तर्हि स्थूलचिदचितोः प्रकृतिकार्यत्वमेव नेश्वरकार्यत्वम्।

प्र—घटंप्रति मृद इव स्थूलचिदचितौ प्रति प्रकृतेरुपादानत्वेपि कुलालवदीश्वरस्य निमित्तकारणत्वात्।

वा—निमित्तकारणात्कार्यं पृथक्सिद्धमेव; कुलालाद्घटवत् ।

प्र—ईश्वरस्य स्वतो निमित्तकारणत्वेपि प्रकृत्यधिष्ठानद्वारा उपादानत्वमपि; ईश्वराधिष्ठितप्रकृतिपरिणामत्वाज्जगतः ।

वा—स्थूलचिदचितोरीश्वरापृथक्सिद्धत्वेपि केवलचितस्सूक्ष्माचितश्च तत्पृथक्सिद्धिरेव; तदकार्यत्वात् ।

प्र—सूक्ष्मचिदचितोरीश्वरशरीरत्वादीश्वराऽपृथक्सिद्धत्वम् ।

वा—शरीरशरीरिणौ परस्परं पृथक्सिद्धावेव ।

प्र—मैवं, देहात्पृथग्देहिनो लोकान्तरगन्तुस्सिद्धत्वेऽपि देहिनः पृथग्देहस्याऽसिद्धेः ।

वा—श्मशानगन्ता देहोऽपि देहिनः पृथक्सिद्ध एव ।

प्र—अचेतनदेहस्य देहिनः पृथक्सिद्धत्वेऽपि चेतनदेही सिद्ध एव ।

वा—तर्हीश्वरादचेतनदेहः पृथक्सिद्ध एव ।

प्र—परिच्छिन्नाज्जीवादेवाचेतनस्य पृथक्सिद्धिः, नतु व्यापकादीश्वरात् ।

वा—तर्हि व्यापक ईश्वरश्च देहात्पृथगसिद्ध एव ।

प्र—देवदत्तदेहोपाधिकस्येश्वरस्य यज्ञदत्तदेहात्पृथक्सिद्धत्वात् ।

वा—कथमेकस्यास्सूक्ष्मप्रकृतेः पृथक्सिद्धिरीश्वरस्य ?

प्र—चिदुपाध्यपेक्षया ।

वा—यद्येवमुपहितेश्वरस्य पृथक्सिद्धिस्तर्हि निरुपाधिकस्य तस्याऽपृथक्सिद्धिरेव ।

प्र—निरुपाधिकेश्वरस्यैवाभावात्, चिदचिद्विशिष्टो हीश्वरः ।

वा—कीदृशं तद्वैशिष्टयम् ?

प्र—चिदचिच्छरीरकत्वमित्युक्तमेव ।

वा—किं चिदचिदनुगतत्वं तत् ?

प्र—ओम् ।

वा—यद्यनुगतात्पृथगनुगन्तव्यं न सिद्धं तर्हि कथमनुगन्त्रनुगन्तव्यभावसिद्धिः ?

प्र—अनुगतात्पृथगनुगन्तव्याऽसिद्धावप्यनुगन्तव्यात्पृथगनुगन्तुरस्य सिद्धत्वात् ।

वा—किमिदमनुगन्तव्यं चिदचिद्द्रव्यं सत्यं नित्यं च ?

प्र—तथैव ।

वा—कथ'मेकमेवाद्वितीयं ब्रह्मे'ति श्रुतस्य ब्रह्मणोऽद्वैतत्वस्योपपत्तिः ?

प्र—स्वसमानद्वितीयवस्तुरहितत्वादुक्तं ब्रह्माद्वितीयमिति श्रुत्या ।

वा—एवं जीवोप्यद्वितीय एव ।

प्र—न, स्वसमानानन्तजीवसत्त्वात्; नाना हि जीवाः ।

वा—'नेह नानास्ति किञ्चने'ति श्रुत्या ब्रह्मणि द्वैतं प्रतिषिध्यते।

प्र—अब्रह्मात्मकद्वैतप्रतिषेधपरा श्रुतिः ।

वा—'अहं ब्रह्मास्मी'ति श्रुत्या जीवब्रह्माभेदः प्रतिपाद्यते ।

प्र—ब्रह्मात्मको जीव इति श्रुत्यर्थः ।

वा—कथं जीवस्य ब्रह्मात्मकत्वम् ?

प्र—ब्रह्मशरीरत्वात् ।

वा—तर्ह्यचिद्द्रव्यमपि ब्रह्मात्मकमेव ।

प्र—सत्यमत एव सर्वं खल्विदं ब्रह्मेति श्रुतिः ।

व —बहिर्भूतं ब्रह्मापि जीवस्य शरीरमेव ?

प्र—ओम् ।

वा—कथमनुगतस्य जीवस्य ब्रह्मणः पृथगसिद्धिः ?

प्र—न, केवलमन्तस्स्थमेव वस्त्वनुगतं, किंतु बहिरन्तर्व्यापकमेव । व्यापकत्वं ह्यनुगतत्वम् ।

वा—किमस्माद्भिन्नात्मज्ञानात्फलम् ?

प्र—'निरञ्जनः परमं साम्यमुपैती'ति श्रुतमीश्वरसाम्यमेव ।

वा—'य उदरमन्तरं कुरुते, अथ तस्य भयं भवती'ति भयं श्रूयते ।

प्र—अब्रह्मात्मकजीवदर्शनस्य भयहेतुत्वमुक्तं श्रुत्या ।

वा—परिच्छिन्नजीवस्य कथमपरिच्छिन्नब्रह्मसाम्यम् ?

प्र—सर्वज्ञत्वादिगुणतः ।

वा—यदि ब्रह्मभिन्नद्रष्टृजीवसिद्धिस्तर्हि 'नान्योतोस्ति द्रष्टे'ति श्रुतिविरोधः ।

प्र—न, ब्रह्मद्रष्टृपुरुषाभावपरत्वात्तस्याः; जीवा हि स्वान्परस्परं पश्यन्ति देहादींश्च, न तु ब्रह्म पश्यन्ति, ब्रह्म तु सर्वमपि; अत एव ब्रह्मणस्सर्वज्ञत्वम् ।

वा—जीवोपि ब्रह्म पश्यत्येव 'दृश्यते त्वग्र्यया बुद्ध्ये'ति श्रुतेः ।

प्र—परोक्षमेव ब्रह्म पश्यति; न तु प्रत्यक्षम् ।

वा—ब्रह्मापि जीवं परोक्षमेव पश्यति ।

प्र—न, 'अन्यस्त्वनश्नन्नभिचाकशीति, साक्षी चे'तेत्यादिश्रुतेः।

वा—मुक्तजीवः प्रत्यक्षमेव पश्यति ब्रह्म; सर्वज्ञत्वात्।

प्र—ओम्।

वा—कथं श्रुत्यविरोधः ?

प्र—संसारमण्डले 'नान्योतोस्ति द्रष्टे'ति श्रुत्याशयात्। यद्वा मुक्तोपि परमपदनिलयं नारायणमेव पश्यति, न तु सर्वान्तरं ब्रह्म; अदृश्यत्वात्तस्य।

वा—हन्त! तर्हि ईश्वर एकएव द्रष्टा, प्रकृतिपुरुषौ तु दृश्यावेव।

प्र—पुरुषो द्रष्टापि।

वा—कथमेकस्य द्रष्टृदृश्यभावद्वयम् ?

प्र—उपपद्यत एव। द्रष्टृदृश्यत्वयोरविरोधात्; देवदत्तो हि विष्णुदत्तं पश्यति तेन दृश्यते चेति।

वा—देहेन्द्रियादिसङ्घात एव दृश्यते।

प्र—तर्हि सङ्घात एव पश्यति।

वा—अहंप्रत्ययविषयो जीवः पश्यति; अहमिमं पश्यामीत्यनुभवात्।

प्र—तर्हि जीव एव दृश्यते। मामयं पश्यतीत्यनुभवात्।

वा—सङ्घाते आत्माभिमानाज्जीवस्य दृश्यत्वं विष्णुदत्तो हि जीवो देवदत्तं दृष्ट्वा गौरोयं स्थूलोयमिति प्रत्येति।

प्र—तथा सङ्घात एव पश्यति; चक्षुष एव द्रष्टृत्वात्।

वा—मैवं, चक्षुषः करणत्वादात्मनः कर्तृत्वाच्च, चक्षुषा पश्यामीति ह्यनुभवः।

प्र—तर्ह्यन्तःकरणमस्तु द्रष्टृ।

वा—अन्तःकरणस्य करणत्वेन कर्तृत्वासम्भवात् । मनसाहमिदं मनोमीत्यनुभवाच्च ।

प्र—यस्सङ्घातं पश्यति स आत्मानं पश्यत्यन्यं जीवं च पश्यति ।

वा—अदृश्यत्वादन्यस्य न ह्यात्मानमिवान्यं जीवं कोपि साक्षात्पश्यति; अन्यथा जीवान्तरानुभूयमानसुखदुःखादिसाक्षात्कारापत्तेर्जीवस्य ।

प्र—जीवस्य जीवान्तरादृश्यत्वेपि ब्रह्मदृश्यत्वमस्त्येव, स्वदृश्यत्ववत्, जीवो ह्यात्मानं वेत्ति ।

वा—कर्मकर्तृविरोधान्न स्वदृश्यत्वं स्वस्य ।

प्र—मामहं जानामीत्यनुभवः कथम् ?

वा—स्वप्रकाशत्वाज्जीवस्य; चक्षुरादिव्यापारं विना जीवो हि स्वयमवभासते ।

प्र—कुतस्स्वप्रकाशत्वम् ?

वा—ज्ञानस्वरूपत्वात्, ज्ञानं ह्यात्मानमन्यांश्चावभासयतीति स्वप्रकाशम् ।

प्र—ज्ञानं ज्ञेयमेवावभासयति, ज्ञानं तु ज्ञानान्तरेणावभास्यते, सत्त्वादनुव्यवसायस्य ।

वा—तच्च ज्ञानान्तरं केनावभास्यते ?

प्र—अन्येन ज्ञानान्तरेण ।

वा—तदपि केन ?

प्र—ततोप्यन्येन ।

वा—तर्ह्यनवस्थादोषः ।

प्र—तथा चेत् ज्ञानं ब्रह्मणा भास्यते ।

वा—तच्च ब्रह्म ज्ञानस्वरूपं खलु।

प्र—भवतु, जीवस्वरूपज्ञानाद्ब्रह्मज्ञानं विलक्षणमिति ब्रह्मावभास्य एव जीवः।

वा—ब्रह्मस्वरूपं ज्ञानं केन भास्यते?

प्र—स्वेनैव।

वा—कुतः?

प्र—स्वयंप्रकाशत्वात्।

वा—किं मानम्?

प्र—'तमेव भान्तमनुभाति सर्व'मिति श्रुतिः।

वा—को भेदो जीवब्रह्मस्वरूपज्ञानयोः?

प्र—ब्रह्मप्रकाश्यत्वस्वप्रकाशत्वरूपोऽयमेव।

वा—स च किंप्रयुक्तः?

प्र—परिच्छिन्नत्वापरिच्छिन्नत्वप्रयुक्तः।

वा—ज्ञानेन ज्ञेयं परिच्छिद्यते, नतु ज्ञानं केनापीत्यपरिच्छिन्नमेव ज्ञानम्।

प्र—ज्ञानमपि परिच्छिद्यत एव। देवदत्तस्य कौमुदीमात्रज्ञानमस्ति, विष्णुदत्तस्य भाष्यान्तज्ञानमस्तीत्येवं प्रतीतेः।

वा—मैवं; तत्र कौमुद्यादिविषयपरिच्छेद एव; नतु तद्ज्ञानपरिच्छेदः; ज्ञानगताल्पत्वमहत्त्वयोर्ज्ञेयोपाधिप्रयुक्तत्वात्।

प्र—ज्ञानानां नानात्वादस्त्येव परिच्छेदः।

वा—विषयनानात्वप्रयुक्तमेव ज्ञाननानात्वं; न स्वत इत्येकमेव ज्ञानं, यद्वा वृत्तिज्ञानान्येव नाना; नतु चैतन्यरूपं ज्ञानम्।

प्र—वृत्तिज्ञानवज्जीवचैतन्यमपि परिच्छिन्नमेव।

वा—तर्हि क्षणिकमपि स्यादेव ।

प्र—परिच्छिन्नमपि चैतन्यं नित्यमेव; ईश्वरसङ्कल्पवशात् ।

वा—केन परिच्छिद्यते जीवचैतन्यम् ?

प्र—ब्रह्मचैतन्येन ।

वा—कस्मात् ?

प्र—परिमितत्वात् ।

वा—ब्रह्मचैतन्यं केन परिच्छिद्यते ?

प्र—न केनापि ।

वा—कस्मात् ?

प्र—अपरिमितत्वात् ।

वा—ब्रह्मैकमेव सर्वमात्मानं च वेत्ति, जीवस्तु आत्मानं जगच्च वेत्ति, न तु ब्रह्म; देहादिजगत्तु न किमपि वेत्तीति दृश्यमेव, इत्यत्र किं मानम् ?

प्र—'देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् । सर्वं पुमान्वेद गुणांश्च तद्ज्ञा न वेद सर्वज्ञमनन्तमीडे' इति भागवतम् । 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ते'ति श्रुतिश्च ।

वा—स ईश्वरो वेद्यं जगदेव वेत्ति न तु वेत्तारं जीवम् ।

प्र— वेत्तुर्जीवस्यापि ब्रह्मवेद्यत्वात् ।

वा—कथं वेत्तुर्वेद्यत्वम् ?

प्र—श्रुत्यादिप्रामाण्यात् ।

वा—ब्रह्माऽपि जीवस्यापरोक्षमेव; 'यत्साक्षादपरोक्षा'दितिश्रुतेः।

प्र—ब्रह्मण एव ब्रह्मापरोक्षमिति श्रुत्यर्थात् ।

वा—कथं जीवो ब्रह्मापरोक्षः रूपरहितत्वात् ?

प्र—नीरूपस्यापि सुखादेर्यथा जीवापरोक्षत्वं, तद्वत् ।

वा—यदि जीवस्य सर्वदापि परोक्षं ब्रह्म, तर्हि तन्नास्त्येव ।

प्र—स्वर्गादिवच्छास्त्रप्रामाण्येनास्तित्वं ब्रह्मणः ।

वा—स्वर्गोपि जीवस्य भोगसमये प्रत्यक्षः ।

प्र—तर्हि धर्मादिवदिति विद्धि ।

वा—धर्मः खल्वनुमेयः ।

प्र—ब्रह्माप्यनुमेयमेव ।

वा—कथं तर्हि शास्त्रप्रमाणकं ब्रह्म ?

प्र—श्रुत्यनुगृहीतानुमानगम्यत्वात् ।

वा—किं लिङ्गं ब्रह्मानुमापकम् ?

प्र—जगज्जन्मादिकं जीवपारतन्त्र्यं च ।

वा—प्रकृतिपरतन्त्र एव जीवः, प्रकृतिजन्यमेव जगच्च ।

प्र—जडा प्रकृतिर्जीवान्प्रति नेष्टे; ईश्वरपरतन्त्रा च सा । ईश्वराधिष्ठितप्रकृतित एव जगज्जन्मादिकम् ।

वा—तच्च ब्रह्मपरतन्त्रम् ।

प्र—न, 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतेर्ब्रह्माधिकवस्त्वभावात् ।

वा—ब्रह्मापि सृष्ट्यादिष्वस्वतन्त्रमेव; कालादिसव्यपेक्षत्वात् ।

प्र—ईश्वरशक्तिविशेषत्वात्कालादीनां, ईश्वरस्य हि बह्व्यश्शक्तयस्सन्ति । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया'चेति श्रुतेः ।

वा—तच्च ब्रह्म प्रत्यगात्मैव ।

प्र—न, परमात्मैव ब्रह्म पूर्णत्वात् ; प्रत्यगात्मा तु जीव एव, परिच्छिन्नत्वात् ।

वा—प्रत्यगात्माप्यपरिच्छिन्न एव ।

प्र—न, 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेय' इति श्रुतेः ।

वा—केनास्य परिच्छेदः ?

प्र—देशवस्तुभ्याम् ।

वा—कथम् ?

प्र—जीवोह्यन्तःकरणदेशे एवास्ति अचिदीश्वराभ्यां विलक्षणश्चेति ।

वा—अन्तःकरणे सत्त्वप्रयुक्तमेव जीवस्याणुत्वम् ।

प्र—मैवम् ; अणुत्वादेव जीवस्यान्तःकरणे स्थितिरिति स्वभावत एवाणुर्जीवः ।

वा—कथमणोर्जीवस्य सर्वदेहव्यापित्वम् ?

प्र—धर्मभूतज्ञानद्वारा ।

वा—कथं ज्ञानस्य ज्ञानमेव धर्मः, जीवो हि ज्ञानस्वरूपः ?

प्र—यज्जीवस्य स्वरूपभूतं ज्ञानं, ततोऽन्यदेव धर्मभूतं ज्ञानमिति ज्ञानस्य ज्ञानं धर्मो भवितुमर्हत्येव, धर्मधर्मिणोर्भेदात् ।

वा—किं धर्मभूतेन ज्ञानेन ज्ञेयं परिच्छिद्यते? उत स्वरूपभूतेन?

प्र—धर्मभूतेनैव ।

वा—किमर्थं तर्हि स्वरूपज्ञानाभ्युपगमः ?

प्र—श्रुत्यनुसारार्थं, धर्मभूतज्ञानपरिच्छेदार्थं च ।

वा—तर्हि धर्मज्ञानस्य ज्ञेयत्वमापतितम् ।

प्र—आपततु ।

वा—कथं ज्ञानत्वज्ञेयत्वयोस्सामानाधिकरण्यम् ?

प्र—अविरोधात् ।

वा—स्वरूपज्ञानस्य धर्मज्ञानसद्भावे किं मानम् ?

प्र—'तस्य भासा सर्वमिदं विभाति', 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतयः ।

वा—स्वरूपभूतज्ञानं ज्ञातैव ।

प्र—ज्ञातुरेव स्वरूपं ज्ञानम् ।

वा—ज्ञातुर्धर्मो ज्ञातृत्वमेव ज्ञानम् ।

प्र—भवतु ।

वा—तर्हि सर्वावभासकस्य चैतन्यस्य यत्सर्वावभासनं धर्मस्तदेव ज्ञानं धर्मभूतमित्युच्यते त्वया ।

प्र—ओम् ।

वा—कथमणुर्जीवस्सर्वदेहव्यापिशैत्यादिकमवभासयेत् ?

प्र—भासयेदेव; सूक्ष्मस्यापि दीपस्य गृहान्तस्सर्वपदार्थावभासनशक्तिवदणोरपि जीवस्य तादृशशक्तिसद्भावात् ।

वा—तर्हि स्वरूपचैतन्यस्यैव सर्वावभासकत्वाद्धर्मभूतज्ञानाभ्युपगमो व्यर्थः ।

प्र—न; स्वरूपज्ञाने या सर्वावभासकत्वशक्तिरस्ति तस्या एव धर्मभूतज्ञानत्वात् ।

वा—कथं ज्ञानस्य शक्तित्वम् ?

प्र—'परास्य शक्ति'रिति श्रुत्या ज्ञानशक्तिसद्भावस्य स्थापितत्वात् ।

वा—शक्तिश्शक्तादर्थान्तरं न भवति ।

प्र—भवत्येव, शक्तेरेव शक्तत्वे, अग्निरग्निशक्तिरिति पृथग्व्यवहारासिद्धेः, अग्निस्वरूपनाशाभावेपि मणिमन्त्रादिना अग्निशक्तिनाशदर्शनाच्च ।

वा—यदि जीवचैतन्यं सर्वावभासकं कथं तर्हि तस्य ब्रह्मानवभासकत्वं ब्रह्मावभास्यत्वं च ?

प्र—यथा दीपस्सर्वावभासकोऽपि चक्षुरवभास्यः तदनवभासकश्च; तद्वत् ।

वा—यदि ज्ञानवान् जीवः; कथमस्य सुषुप्तिमूर्छादिषु ज्ञानाभावः?

प्र—तमोऽभिभूतत्वात् ।

वा—किमभिभूतं तमसा ?

प्र—धर्मभूतं ज्ञानम् ।

वा—केन, किमिव ?

प्र—हस्तेन दीपप्रकाश इव ।

वा—तर्हि विक्रियत एव जीवः ।

प्र—न, धर्मज्ञानमेव विक्रियते ।

वा—मुक्तजीवादीश्वरस्य को विशेषः ?

प्र—महानस्ति ।

वा—कथय ।

प्र—वच्मि शृणु; परिच्छिन्नस्सर्वज्ञस्सृष्ट्याद्यकर्ता जीवः; अपरिच्छिन्नस्सर्वज्ञस्सृष्ट्यादिकर्ता ईश्वर इति ।

वा—'निष्कलं निष्क्रिय'मिति श्रुतेरीश्वरस्य निष्क्रियस्य कथं सृष्ट्यादिकर्तृत्वम् ?

प्र—'स्वाभाविकी ज्ञानबलक्रिया'चेति श्रुतेरीश्वरस्सक्रिय एव, गमनादिक्रियारहितमिति तु निष्क्रियपदार्थः पूर्णं हि ब्रह्म, सर्वशक्तिमच्च; 'यतो वे'त्यादिश्रुतेर्ब्रह्मण एव हि जगज्जननसामर्थ्यम् ।

वा—ईश्वरो मायावी जगत्कर्ता, निर्मायं तु ब्रह्म निष्क्रियमेव ।

प्र—ईश्वरस्यैव ब्रह्मत्वात्, निर्मायब्रह्मपदार्थाभावाच्च ब्रह्मणश्शक्तिर्हि माया यदि ब्रह्म निर्मायं स्यात्तर्हि तत्सर्वावभासकं न भवत्येव ।

वा—इष्टापत्तिरेव; सर्वस्यैवाभावात् ।

प्र—कथं प्रतीयमानस्य सर्वस्याभावः ?

वा—यथा प्रतीतस्य सर्पस्य रज्जुगतस्याभावः ।

प्र—जगन्न रज्जुसर्पवन्मिथ्या ।

वा—कस्मात् ?

प्र—भ्रान्तिं विनैव सिद्धत्वात्सत्यसर्पवत्; अतस्मिंस्तद्बुद्धिभ्रान्तिः; यथा रज्जौ सर्पबुद्धिः; प्रकृते च जगत्येव जगद्बुद्धिरियं प्रमैव- तस्मिंस्तद्बुद्धेः प्रमात्वात् ।

वा—ब्रह्मैव जगद्रूपेण भातीति ब्रह्मणि जगद्बुद्धिरियं भ्रान्तिरेव ।

प्र—सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव स्थूलजगद्रूपेण परिणतं, मृद्घट इवेति; तादृशे ब्रह्मणि जगद्बुद्धिः प्रमैव ।

वा—जगत्कालत्रयेपि नास्तीति मिथ्यैव ।

प्र—सूक्ष्मत्वस्थूलत्वोपाधिभ्यां कालत्रयेप्यस्त्येवेति न मिथ्या ।

वा—कार्यमनृतं कारणं सत्यं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' इति श्रुतेः; ततश्च कारणं ब्रह्मैव सत्यं, कार्यं जगन्मिथ्यैव ।

प्र—सूक्ष्मचिदचिद्विशिष्टब्रह्मण एव कारणत्वेन सूक्ष्मचिदचितोरेव स्थूलचिदचित्त्वेन च चेतनाचेतनात्मकं जगत्सत्यमेव ।

वा—कथं सत्यस्य संसारस्य निवृत्तिः ?

प्र—ईश्वरानुग्रहात् सति प्रकृतिपुरुषविवेके ।

वा—अविवेककृतस्संसारः कथं सत्यः ?

प्र—संसारो नाऽविवेककृतः; किंतु, प्रकृतिपुरुषसङ्गकृतः ।

वा—स सङ्गः किंकृतः ?

प्र—अविवेककृतः ।

वा—कथं तर्हि सङ्गस्सत्यः ?

प्र—सङ्गो भ्रान्तिसिद्ध एव ।

वा—तर्हि सङ्गजस्संसारोऽपि मिथ्यैव ।

प्र—न, भ्रान्तिसिद्धरज्जुसर्पजन्यस्य भयकम्पमरणादेस्सत्यत्वदर्शनात् ।

वा—सङ्गहेतुरविवेकः केन कृतः ?

प्र—भगवन्मायया ।

वा—कथं मायानिवृत्तिः ?

प्र—भगवत्प्रपत्तेः ।

वा—किं तत्र मानम् ?

प्र—'मामेव ये प्रपद्यन्ते मायामेतां तरन्तित' इति गीतावचनम् ।

वा—कोऽयमीश्वरस्य जीवेषु प्रद्वेषः, यन्मायया जीवानामविवेकजननम् ?

प्र—अनादिकालसञ्चितजीवादृष्टवशात् ।

वा—किं तददृष्टम् ?

प्र—पुण्यापुण्यलक्षणं कर्म ।

वा—देहिनो जीवस्य कथं देहरूपप्रकृतिसङ्गस्स्यादसत्यः ?

प्र—अविवेकादयं सत्य एव; सति तु विवेके जीवस्य देहित्वमेव न सिद्ध्यति ।

वा—तर्हि जीवो ब्रह्मैव ।

प्र—न, परिच्छिन्नत्वात् ।

वा—जीवस्सत्यो देहस्सत्यश्चेति कुत स्तयोस्सङ्गो न सत्यः ?

प्र—असङ्गत्वात्पुरुषस्य ।

वा—असङ्गस्यापि जीवस्य देहसङ्गस्स्यादेवेश्वरसङ्कल्पवशात् ।

प्र—भवतु, तर्हि सङ्गोऽपि सत्यः ।

वा—कथमसङ्गत्वश्रुतिविरोधपरिहारः ?

प्र—मुक्तजीवपरत्वात्तच्छ्रुतेः, प्रकृतिसङ्गरहितो हि मुक्तः ।

वा—कथं प्रकृतिसङ्गराहित्यं मुक्तस्य ?

प्र—ईश्वरानुग्रहात् ।

वा—ईश्वरस्यैव प्रकृतिविशिष्टत्वेन कथं जीवस्य तदनुग्रहात्प्रकृतिविमोक्षः ?

प्र—प्रकृतिविशिष्टोऽपीश्वरः प्रकृतिवियुक्त एव; प्रकृतावहं-ममाभिमानाभावात् ।

वा—'प्रकृतिं विद्धि मे परा'मिति गीतावचनात्प्रकृतौ ममा-भिमानोऽस्त्येवेश्वरस्य ।

प्र—अहमभिमानस्तु नास्तीति ।

वा—सोप्यस्त्येव, 'आत्मानं मानुषं मन्ये रामं दशरथात्मज'-मिति रामायणात् ।

प्र—तद्वचनस्य लीलाप्रयुक्तत्वात् ।

वा—तर्हि लीलयैवेश्वरस्य प्रकृतिवैशिष्ट्यमपीति ब्रूहि ।

प्र—रामकृष्णादिदेहाकारप्रकृतिवैशिष्ट्यस्य लीलामयत्वेपि प्रकृतिमात्रवैशिष्ट्यस्य स्वाभाविकत्वात् ।

वा—किं तत्प्रकृतिमात्रम् ?

प्र—यज्जगज्जन्माद्युपादानम् ।

वा—जीवो मुक्तिदशायां शुद्धः प्रकृतिवियुक्तत्वादीश्वरस्तु सदा-प्यशुद्ध एव प्रकृत्यवियुक्तत्वादिति मुक्त एवेश्वरादुत्तम इति सिद्धम् ।

प्र—प्रकृत्यवियुक्तत्वेऽपि शुद्धमेवेश्वरस्वरूपम् ।

वा—कस्मात् ?

प्र—प्रकृतिविलक्षणत्वात्प्रकृतावहंममाभिमानाभावाच्च ।

वा—तर्हि विदुषो जीवस्य स्वरूपमपि शुद्धमेव ।

प्र—भवतु ।

वा—नित्यशुद्धबुद्धमुक्तस्वभावो जीवो ब्रह्मैव ।

प्र—न ।

वा—कुतः ?

प्र—परिच्छिन्नत्वात् ।

वा—'यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यमिति' श्रुतेरल्पो जीवस्स्यादनित्यः ।

प्र—ईश्वरसङ्कल्पवशादल्पत्वेपि जीवस्यानित्यत्वाभावः । किंच सावयवाणोरेवानित्यत्वं, नतु निरवयवाणोः; नित्याःखलु परमाणवः ।

वा—'येन सर्वमिदं तत'मिति 'कूटस्थमचलं ध्रुवं' इति च गीतावचनाद्विभुरेव जीवः ।

प्र—न, विभुत्वे उत्क्रान्तिगत्याद्ययोगात् । गीतावचनं तु धर्मभूतज्ञानद्वारा सर्वव्यापकः करचरणाद्यभावाद्देहवच्चलनरहितश्चेत्यभिप्रायगर्भम् ।

वा—सर्वव्यापिनीश्वरचैतन्ये अणुपरिमाणजीवचैतन्यानि कुतो न विलीनानि, समुद्रोदके वर्षोदबिन्दुबृन्दवत् ?

प्र—जगत्कारणप्रकृतिव्यवधानसत्त्वात्, ईश्वरचैतन्यं हि प्रकृतिविशिष्टम् ।

वा—प्रकृतेरन्तर्वर्तमानो भवत्वीश्वरो जीवदुर्लभः । प्रकृतेर्बहिस्स्थस्तु सुलभ एव ।

प्र—मूलप्रकृतेर्बहिर्देशस्यैवाभावात्, तत्सत्त्वे वा जीवस्य तद्देशस्याऽसन्निकृष्टत्वात् ।

वा—'यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भव'तीत्यादिजीवब्रह्मसायुज्यप्रतिपादकश्रुतीनां का गतिः ?

प्र—अर्वाचीनैः कल्पितत्वेनाधोगतिरेव; यद्वा तादृगेव भव-

तीति ब्रह्मसाम्यमेव मुक्तजीवस्य प्रतिपाद्यते श्रुतिभिः । 'परमं साम्य-मुपै'तीति श्रुत्यन्तरात् । कथमन्यथा जीवस्य ब्रह्मणि लयस्स्यान्नित्यस्य ।

वा—अनया मुक्त्या स्वाभाविकाणुभावापत्तिरूपया जीवस्य किं फलम् ?

प्र—देहसम्बन्धाभाव एव । तत्सम्बन्धप्रयुक्तो हि जन्मजरा-मरणादिसर्वसंसारः, तत्प्रयुक्तं दुःखं च, यद्वा ब्रह्मानन्दानुभवः ।

वा—प्रकृतितिरोहितत्वाद्ब्रह्मणः कथं तदानन्दानुभवो जीवस्य ?

प्र—ईश्वरानुग्रहात्प्रकृत्येकदेशं भित्वा परमात्मानं प्रविश्य जीवस्तदानन्दमनुभवति ।

वा—तर्हि सिद्धं जीवब्रह्मसायुज्यम् ।

प्र—न सिद्धं, भोक्तृभोग्यभावविरोधात्; जीवो हि भोक्ता, ब्रह्म तु भोग्यम् ।

वा—ब्रह्मचैतन्यं प्रविष्टस्य जीवचैतन्यस्य कुतो न लयः ?

प्र—ईश्वरसङ्कल्पादेव ।

वा—यदि मुक्तस्य भोग्यं ब्रह्म, तर्हि जीव एव ब्रह्मणोऽपि शेषीति ब्रह्मणो जीवशेषत्वमापतितम् ।

प्र—ब्रह्म न शेषं, किंतु तदीयानन्द एव; जीवो हि ब्रह्मा-नन्दं भुंक्ते, नतु ब्रह्म ।

वा—किं ब्रह्मतदानन्दयोर्भेदः ?

प्र—सत्यं ब्रह्म हि आनन्दगुणकम् । 'आनन्दमय' इतिश्रुतेः ।

वा—स हि कोशः ।

प्र—न, अन्नप्राणमनांस्येव कोशाः, विज्ञानमयानन्दमयौ जीवेश्वरावेव ।

वा—कथं मयट उपपत्तिः ।

प्र—प्राचुर्यार्थे मयड्विधानात् ।

वा—किमानन्दप्रचुरे ब्रह्मणि लेशतो दुःखमस्ति ?

प्र—न, प्राचुर्यस्य इतरसत्तानिषेधपरत्वात् ।

वा—किं सर्वे मुक्ता आत्मानन्दमनुभवन्ति? उत कतिचिदेव ?

प्र—कतिचिदेव ।

वा—के ते ?

प्र—ये परमात्मानमुपासितवन्तः ।

वा—आत्मोपासकानां का गतिः ?

प्र—ते स्वानन्दमेवात्यल्पमनुभवन्ति ।

वा—कुतः ?

प्र— आत्मोपासकानामीश्वरानुग्रहाभावेनेश्वरावारकप्रकृतिभेदनस्य दुश्शकत्वात् ।

वा—तटाकं प्रविश्य गौर्जलं मुखेनेव, जीव ईश्वरं प्रविश्य तदानन्दं केनानुभवति ?

प्र—स्वेनैव, यद्वा धर्मभूतज्ञानेन ।

वा—एवमनन्तमुक्तानुभूयमानत्वादीश्वरानन्दस्य क्षयस्स्यात् ।

प्र—न, अक्षयत्वात्तदानन्दस्य ।

वा—कथं तर्हि जीवानामीश्वरशेषत्वम् ?

प्र—ईश्वरपरतन्त्रत्वादीश्वरलीलारसपरिपूरकत्वाच्च ।

वा—स्वानन्दमपहरद्भिर्मुक्तैः कथमीश्वरस्य लीलारसः पूर्यते ।

प्र—यथा स्वस्तन्यं पिबद्भिश्शिशुभिर्मातुः । वत्सलो हि जीवेष्वीश्वरः । 'वत्सलो वत्सरो वत्सी'ति सहस्रनामपाठात् ।

वा—कथमीश्वराजन्येषु जीवेष्वीश्वरस्य वात्सल्यम् ?

प्र—मनुष्यत्वादिविशेषेण जीवानामीश्वरजन्यत्वात्, यथा कश्यपादिभ्य इन्द्रादयः ।

वा—क ईश्वरस्य प्रथमः पुत्रः ?

प्र—हिरण्यगर्भः ।

वा—सहि स्रष्टा ईश्वर एव ।

प्र—न, ईश्वरसृष्टत्वाज्जीव एव ।

वा—रुद्रः कः ?

प्र—ईश्वरस्य पौत्रः ।

वा—विष्णुः कः ?

प्र—ईश्वर एव ।

वा—कस्मात् ?

प्र—स्वतन्त्रत्वात् ।

वा—विष्णुविग्रहोऽपि प्राकृत एव ।

प्र—न; अप्राकृतदिव्यमङ्गलः ।

वा—कुतः ?

प्र—शास्त्रादिभ्यः ।

वा—किं शास्त्रम् ?

प्र—नारायणोपनिषदादिकम् ।

वा—य एव विष्णुशरीरे वर्तते चैतन्यरूपो नारायणस्स एव पाषाणेऽपि, नारायणस्य व्यापित्वादिति विष्णुवत्पाषाणस्यापि नारायणत्वमेव ।

प्र—ओम् ।

वा—तर्हि कुतो ब्रह्मरुद्रादीनामनारायणत्वम् ?

प्र—जीवान्तर्व्यापिचैतन्यदृष्ट्या तेऽपि नारायणभूता एव ।

वा—जीवस्यैव चैतन्यत्वात्कथं तस्मिन्नपि चैतन्यव्याप्तिः ?

प्र—युज्यत एव, चैतन्यभेदात् ।

वा—'ममैवांशो जीवलोके जीवभूतस्सनातन' इति गीतावचनादीश्वरांशजीवस्य कथमीश्वराद्भेदः ?

प्र—ईश्वरस्य प्रकृतिपुरुषविशिष्टत्वेन जीवस्येश्वरांशत्वेपीश्वराद्भेद एव; यथा दण्डिनोंशो दण्डो दण्डिनो भवति भिन्नः ।

वा—तर्हि देहिनो जीवस्य देहोप्यंऽश एव ।

प्र—इष्टापत्तिः ।

वा—प्रकृतिरपीश्वरांश एव ।

प्र—ओम् ।

वा—ईश्वरस्य प्रकृतिपुरुषवैशिष्ट्ये किं मानम् ?

प्र—'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जग'दिति गीतावचनमेव ।

वा—'सदेव सोम्येदमग्र आसी'दिति श्रुतेस्सृष्टेः प्राग्ब्रह्मैकमेवास्ति ।

प्र—स्थूलचिदचित्सृष्टेः प्राक्प्रलयदशायां च सूक्ष्मचिदचितौ स्त एव । अन्यथा असत्कार्यवादापत्तेः । प्रलये विना ज्ञानादिकं सर्वमुक्तिप्रसङ्गाच्च । श्रुतिस्तु सूक्ष्मचिदचिद्विशिष्टब्रह्मसद्भावप्रतिपादनपरा ।

वा—'अनेन जीवेनात्मनानुप्रविश्ये'ति श्रुतेरीश्वर एव जीवः ।

प्र—जीवेन शरीरेणेति श्रुत्यर्थान्नेश्वरो जीवः । ईश्वरस्यैव जीवत्वे नियाम्यनियामकभावासिद्धेः ।

वा—किमीश्वरवज्जीवोऽप्येकः ?

प्र—न ।

वा—कुतः ?

प्र—'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानिति' श्रुतेस्सुखाद्यनुभववैचित्र्याच्च ।

वा—'अशब्दमस्पर्शमरूप'मित्यादिश्रुत्या ईश्वरस्याशरीरत्वात्कथं रामकृष्णादय ईश्वराः ?

प्र—केवलेश्वरस्य तथात्वेऽपि विशिष्टेश्वरश्शरीर्येव ।

वा—किं द्वावीश्वरौ ?

प्र—न, एक एवेश्वरः परं तु यः प्रकृतिपुरुषान्तरस्सोऽशरीरः, सशरीरश्चेश्वरः ।

वा—कथम् ?

प्र—स्वतः परतश्च ।

वा—तर्हि जीवोऽपि स्वतोऽशरीर एव ।

प्र—सत्यम् ।

वा—तर्हि, अस्मदादिशरीरगतः पुरुष इव रामकृष्णादिशरीरगतोऽपि पुरुषो जीव एव ।

प्र—न, ईश्वर एव ।

वा—कुतः ?

प्र—सर्वज्ञत्वादिगुणयोगात् ।

वा—कथं परिच्छिन्नस्य तस्येश्वरत्वम् ?

प्र—अपरिच्छिन्न एव ।

वा— कथं देहिनः परिच्छेदाभावः ?

प्र—यदि देहे एकस्मिन्नेवास्ति, तर्हि देहात्तस्य परिच्छेदोऽस्तु, नतु तथा; किंतु सर्वत्रास्तीति ।

वा—जीवोऽपि सर्वत्रास्त्येव ।

प्र—न ।

वा—कुतः ?

प्र—अचेतने जीवादर्शनात् ।

वा—ईश्वरोऽपि नास्त्यचेतने ।

प्र—अस्त्येव, स्तम्भान्नरसिंहाविर्भावस्मरणात् ।

वा—यस्स्तम्भादुद्भूतो नरसिंहस्स चेतन एव, रामकृष्णादिवदिति चेतन एव नरसिंहदेहेस्तीश्वरः, नाचेतने ।

प्र—ईश्वरस्य परोक्षत्वादचेतने तस्यानुपलब्धिः ।

वा—चेतनेऽपि तस्यानुपलब्धिरेव ।

प्र—बाढम् ।

वा—यद्यनुपलभ्यमानोऽपीश्वरोऽचेतनेऽस्ति तर्हि जीवोऽप्यस्त्येव ।

प्र—न ।

वा—कुतः ?

प्र—जीवस्याचेने मृदादावहमित्यनुपलम्भात्प्रत्यक्षो हि जीवस्वस्य स्वयं; नहि कोपि जीवो मृदादावहं वर्त इति मन्यते देहवत् ।

वा—देवदत्तजीववत्, राम ईश्वरोपि भार्यावियोगदुःखमनुभूतवानिति कथं व्यापित्वं रामस्य ? नहि व्यापकस्य केनचित्क्वचिदपि वियोगः ?

प्र—लीलावशात्, स्त्रीसङ्गिनां गतिरिति प्रथयंश्चचारेत्युक्तं भागवते । 'रामो न गच्छति न तिष्ठति नानुशोचती'त्युक्तमध्यात्मरामायणे च ।

वा—जीवस्यापि लीलयैव वियोगः ।

प्र—न, कर्मणैव ।

वा—ईश्वरस्यापि रामस्य लीलया जीववद्भार्यावियोग इत्यस्य कोर्थः ?

प्र—सर्वव्याप्यपि नारायणः लीलया मानुषं देहमाश्रित्य भार्यावियोगमनुभवतीति ।

वा—कथं लीलयापि व्यापकस्य वियोगः ?

प्र—ईश्वरलीला हि नातिशङ्कनीया ।

वा—हन्त ! तर्हि, यद्यपरिच्छिन्नोऽपि लीलया परिच्छिन्नो भवति, आनन्दमयोऽपि दुःखी तर्हि ईश्वरोऽपि लीलया जीवो भवत्येव ।

प्र—जीवो न भवति, किंतु जीववद्भवति । यथा नटो राजवत्, यथा वा राजा रक्षकपुरुषवत् ।

वा—वच्छब्दस्य कोऽर्थः ?

प्र—वस्तुतो न भवति, किंतु तथा नटनमेवेति ।

वा—तर्हीश्वरो रामकृष्णादिदेहानिव देवमनुष्यादिदेहानपि

स्वीकृत्य संसरन्निव नटतीत्यभ्युपगम्य, ईश्वरातिरिक्तजीवाभ्युपगमवाद-स्त्यज्यताम् ।

प्र—देवादिदेहेष्वहमित्यभिमन्यमानस्य प्रत्यक्षस्य जीवस्य दुरपलापत्वात् ।

वा—सोऽभिमानी ईश्वर एव ।

प्र—न ।

वा—कुतः ?

प्र—संसार्यहं जीवो नेश्वर इत्यनुभवात् ।

वा—रामस्यापि तादृश एवानुभवोऽस्ति ।

प्र—नास्ति ।

वा—कुतः ?

प्र—परहृदयस्याऽप्रत्यक्षत्वेन त्वया रामानुभवस्य दुर्ज्ञेयत्वात् ।

वा—'आत्मानं मानुषं मन्य' इति रामवाक्यादेव तदनुभव-मनुमिनोमि ।

प्र—तद्वाक्यस्य लीलाप्रयुक्तत्वात् ।

वा—परिच्छिन्नस्संसार्यपि रामः कृष्णश्चेश्वरः ब्रह्मरुद्रादयस्तु जीवा इत्यत्र किं विनिगमकम् ?

प्र—स्वाभाविकज्ञानबलक्रियाशक्त्यतिशयवत्त्वम् ।

वा—कुतः परिच्छिन्नस्य संसारिणस्तद्वत्त्वम् ?

प्र—रामगतपरिच्छेदसंसारयोर्लीलामयत्वाद्वस्तुतोऽपरिच्छिन्नोऽ-संसार्येव रामः ।

वा—तर्हीश्वरस्य रामत्वादिकं मिथ्यैव ।

प्र—न मिथ्या, किंतु लीला ।

वा—कस्मात् ?

प्र—अर्थक्रियाकारित्वात्; अर्थक्रियाशून्यं शुक्तिरजतादिकं हि मिथ्या । रामकृष्णादयस्तु सेतुबन्धनगोवर्धनोद्धरणाद्यर्थक्रियाकारिण एवेति सत्या एव ।

वा—कथमानन्दमयेश्वरस्य दुःखित्वं सत्यम् ?

प्र—लीलया सर्वसम्भवात् ।

वा—यदीश्वरः परोक्षस्तर्हि रामादयः प्रत्यक्षत्वान्नेश्वरः ।

प्र—रामादिदेहप्रत्यक्षेऽपि तदन्तर्गतेश्वरचैतन्यस्याऽप्रत्यक्षत्वादीश्वरत्वम् ।

वा—तर्हि देवादिदेहान्तरचैतन्यस्याप्रत्यक्षत्वादीश्वरत्वम् ।

प्र—न, परोक्षापरिच्छिन्नचैतन्यस्यैवेश्वरत्वात्; प्रत्यक्षमप्रत्यक्षं वा चैतन्यं परिच्छिन्नं जीव एव ।

वा—लीलयैव जीवस्यापि परिच्छिन्नत्वम् ।

प्र—न, स्वत एव ।

वा—कुतः ?

प्र—सर्वव्याप्त्यक्षमत्वात् ।

वा—कथमिदं ज्ञायते ?

प्र—जीवस्य स्वानुभवादेव; नहि जीवो देशान्तरस्थं कालान्तरस्थं वा वेद; व्यापित्वाभावात् ।

वा—ईश्वरस्यापि नास्ति सर्वानुभवः ।

प्र—अस्ति ।

वा—कुतः ?

प्र—'वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्च'नेति गीतावचनात् ।

वा—यदि परिच्छिन्नः कृष्णो ब्रह्म तर्हि अहमपि ब्रह्मैव ।

प्र—न त्वं ब्रह्मासि, कृष्ण एव ब्रह्म ।

वा—कुतः ?

प्र—अपरिच्छिन्नत्वात्कृष्णस्य ।

वा—कथं तद्ज्ञायते ?

प्र—विश्वरूपप्रदर्शनात्कृष्णस्य ।

वा—तद्धि देहव्याप्तिं गमयति ।

प्र—चैतन्यव्याप्तिपूर्विकैव देहव्याप्तिः ।

वा—तर्हि हनूमानप्यपरिच्छिन्न एव; व्यापिदेहवत्त्वात् ।

प्र—न, हनूमद्देहस्य विश्वात्मकत्वाभावात् । सर्वं हि विश्वमीश्वरस्यैकस्यैव शरीरम् ।

वा—कस्मात् ?

प्र—'सहस्रशीर्षा पुरुष' इत्यादिश्रुतेः; 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दिति गीतावचनाच्च ।

वा—चैतन्यमेकमेव भेदकाभावात् ।

प्र—न, भेदकसद्भावात् ।

वा—किं तद्भेदकम् ?

प्र—प्रकृतिरेव ।

वा—कथम् ?

प्र—यत्प्रकृतिं सर्वामभिव्याप्य स्थितं तदीश्वरचैतन्यं; यत्प्रकृत्येकदेशस्थं तज्जीवचैतन्यमिति ।

वा—यत्र जीवचैतन्यं तत्र प्रकृतिदेशे नेश्वरव्याप्तिरिति कथं सर्वव्यापित्वमीश्वरस्य ?

प्र—जीवेऽपीश्वरसत्त्वाज्जीवव्याप्तः प्रकृत्येकदेशोऽपीश्वरव्याप्त एव ।

वा—सर्वगतत्वादनन्तस्य 'स एवाहमवस्थित' इति प्रह्लाद-वचनाज्जीवेश्वराभेदः ।

प्र—जीवगतत्वेन जीवशरीरक ईश्वरो जीव एव; यथा मनुष्यशरीरगतत्वेन जीवो मनुष्य इति तदर्थात् ।

वा—का प्रकृतिः ?

प्र—प्रधानम् ।

वा—तद्धि 'ईक्षतेर्ना शब्द'मिति सूत्रकारैर्निराकृतम् ।

प्र—अब्रह्मात्मकस्वतन्त्रप्रधाननिराकरणपरं तत्सूत्रं; ब्रह्मात्मिका तु प्रकृतिरस्त्येव; गीताप्रामाण्यात् ।

वा—कथं प्रकृतेर्ब्रह्मात्मकत्वम् ?

प्र—ब्रह्मशरीरत्वात् । शरीरस्य शरीरी खल्वात्मा ।

वा—आत्मा जीव एव ।

प्र—न, शरीरंप्रति जीव आत्मा; जीवंप्रतीश्वर आत्मा, अत एव मुख्य आत्मा ईश्वर एव परमात्मेत्युच्यते ।

वा—जीव एव परमात्मा । 'परमात्मेति चाप्युक्त' इति गीतावचनात् ।

प्र—देहात्माद्यपेक्षया तत्र जीवस्य परमात्मत्वमुक्तं; निरपेक्षत्वं तु परमात्मत्वमीश्वरस्यैव ।

वा—आत्मपरमात्मभेदे न प्रमाणं पश्यामः।

प्र—'श्रुणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मना'मित्यादिवचनान्येव प्रमाणानि।

वा—घटाकाशमहाकाशवदात्मपरमात्माभेद एव।

प्र—न, घटाकाशस्य सोपाधिकत्वादात्मनो निरुपाधिकत्वाच्च। उपाध्यप्रयुक्त एवात्मपरमात्मभेदः।

वा—'तत्त्वमसी'ति श्रुत्या कथं जीवेश्वराद्वैतं प्रतिपाद्यते?

प्र—शरीरशरीरिभावविशिष्टाद्वैतमेव प्रतिपाद्यते; नतु शुद्धाद्वैतम्।

वा—विशिष्टाद्वैतमिति पदमश्रौतम्।

प्र—पदस्याश्रौतत्वेऽप्यर्थश्श्रौत एव।

वा—कस्मात्?

प्र—यस्मात् 'द्वासुपर्णा' इत्यादिश्रुतिभिर्भेदः, 'तत्त्वमसी'त्यादिभिरभेदश्च प्रतिपाद्यते, तस्मात्।

वा—जीवेश्वरयोश्शरीरशरीरिभावविशिष्टाद्वैतमिति ज्ञानेन किं फलम्?

प्र—ईश्वरशरीरत्वाज्जीव ईश्वरपरतन्त्रः, ईश्वरनियाम्यः, ईश्वरशेष इति ज्ञानेन जीवस्य स्वातन्त्र्याभिमाननिवृत्तिः। स्वरक्षाभरस्य सर्वस्येश्वरायत्तत्वेन स्वस्य स्वरक्षाप्रयासाभावः। ईश्वरानुग्रहार्थमीश्वरकैङ्कर्यकरणं तदनुग्रहात्सर्वसंसारनिवृत्तिः, परमपदप्रपत्तिश्चेति।

वा—भिन्नेश्वरज्ञानाद्भवति भयमधिकम्।

प्र—न, तदनुसरणादेव भयं; नतु तत्सेवनात्। भिन्नं हि राजानं संसेव्य सेवकः प्राप्नोति धनम्।

वा—परोक्ष ईश्वरस्सेवाया अविषयः ।

प्र—अत एव श्रीरङ्गनायकाद्यर्चारूपस्वीकार ईश्वरस्य भक्तानुकम्पार्थम् ।

वा—'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति स' इति भागवतादर्चार्चनं व्यर्थमेव ।

प्र—न, सर्वव्यापीश्वर इति ज्ञानाभावप्रयुक्तस्यैवार्चाभजनस्य वैयर्थ्यं, कथमन्यथा सर्वव्यापीश्वरस्य हानं सम्भवति; येन तद्वारणाय ईश्वरं हित्वेत्युच्येत ।

वा—कथं कृत्रिमपाषाणादिविग्रहाणामीश्वरत्वम् ?

प्र—ईश्वराधिष्ठितत्वात् ।

वा—सर्वमपि तर्हि पूज्यमेव ।

प्र—नेति को वदेत् ? अत एव हि 'वासुदेवस्सर्व'मिति, 'स महात्मा सुदुर्लभ' इति गीतासूक्तम् ।

वा—तर्हि व्यर्था एवार्चाः ।

प्र—न, सुन्दरे भगवद्विग्रहे भगवद्बुद्धेस्सुशकत्वात् । नह्यादावेव केवलपाषाणे भगवानिति बुद्धिः कस्याप्युदीयात् ।

वा—अर्चायामपि नोदेत्येव ।

प्र—उदेत्येव; नटे रामादिबुद्धिवत् ।

वा—नहि साकार ईश्वरः ।

प्र—लीलया साकार एव ।

वा—आकारे कथमीश्वरबुद्धिः ?

प्र—आकारवतीश्वर एवेश्वरबुद्धिः ।

वा—कस्मात् ?

प्र—साक्षाद्भगवानेव श्रीरामः भद्राद्राविहास्मदनुग्रहार्थं व्यक्तस्सन् तिष्ठतीति भक्ताशयात् ।

वा—अमी भक्ता देहान्ते किं यान्ति ?

प्र—परमपदम् ।

वा—किं तत् ?

प्र—वैकुण्ठलोकः ।

वा—स क्वास्ते ?

प्र—ब्रह्माण्डादुपरि ।

वा—किं सत्यलोकः ?

प्र—न, सहि हिरण्यगर्भस्थानम् ।

वा—किं तद्गता न मुक्ताः ?

प्र—तद्गता हिरण्यगर्भायुष्यान्ते हिरण्यगर्भेण समं मुच्यन्ते ।

वा—का मुक्तिः ?

प्र—परमपदप्राप्तिः ।

वा—कथं याति जीवो मुक्तिम् ?

प्र—सुषुम्नामार्गेण निर्गत्य रश्म्यनुसारी सन्नर्चिरादिमार्गेण सूर्यमण्डलं भित्वा ब्रह्मलोकं गच्छति ।

वा—किं ब्रह्म ?

प्र—परं ब्रह्म ।

वा—तद्धि सर्वव्यापि ।

प्र—सत्यम् ।

वा—तर्हि ब्रह्मप्राप्त्यर्थं परमपदगमनं व्यर्थम् ।

प्र—न व्यर्थम् ।

वा—कुतः ?

प्र—प्रकृतिवियुक्तस्यैव जीवस्य ब्रह्मप्राप्तिः । सा तु प्रकृतिः परमपदस्थविरजानदीतरणसमय एव जीवं मुञ्चति; नतु ततः प्राक् ।

वा—का सा प्रकृतिः ?

प्र—मनष्षष्ठेन्द्रियप्राणरूपा ।

वा—इन्द्रियाणि दश हि ।

प्र—कर्मेन्द्रियाणि देहेन सहैव जायन्ते; म्रियन्ते च ।

वा—'तत्त्वविदः प्राणा नोत्क्रामन्ती'ति श्रुतेरज्ञस्यैव प्राणोत्क्रमणम् ।

प्र—परमपदं प्राप्तस्य तत्त्वविद एव प्राणोत्क्रमणाभावः; प्राणानामेवाभावात्तस्य ।

वा—'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेर्विदुषो न गमनम् ।

प्र—ब्रह्मैव ब्रह्मविद्भवति; ब्रह्म जानाति, नतु जीवः श्रुत्यर्थात् । 'स एनान् ब्रह्म गमयती'ति श्रुत्यन्तराच्च ।

वा—यदि जीवो ब्रह्म न जानाति, तर्हि कथं मुक्तस्य ब्रह्मप्राप्तिः ?

प्र—मुक्तजीवो जानात्येव; यद्वा मुक्तजीवो बद्धजीवो वा नान्तर्यामिणं जानाति, तस्यादृश्यत्वात् । बद्धजीवस्तु बहिर्भवं ब्रह्मापि न जानाति, असर्वज्ञत्वात् । मुक्तस्तु तज्जानाति; सर्वज्ञत्वात् ।

वा—यदेव बहिस्स्थं तदेवान्तस्स्थं च ।

प्र—सत्यं, तथाहि अन्तस्स्थत्वरूपेण ब्रह्म ज्ञातुं न शक्यते जीवेन । अत एवान्तर्यामीश्वरो दुष्प्राप एव जीवस्य ।

वा—कतिविध ईश्वरः ?

प्र—पञ्चविधः ।

वा—कास्ता विधाः ?

प्र—परव्यूहविभवान्तर्याम्यर्चात्वरूपाः ।

वा—ब्रूहि तद्विवेकम् ?

प्र—वच्मि शृणु ! परो मुक्तप्राप्यं सर्वव्यापिचैतन्यम् । व्यूहो वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः । विभवा रामकृष्णादयः । अन्तर्यामी जीवान्तर्गतः । अर्चाश्श्रीरङ्गनायकवेङ्कटेश्वरादयः । तत्र विभवो द्विविधः । नित्यविभूतिर्लीलाविभूतिश्चेति । नित्यविभूतिर्वैकुण्टे वर्तमानश्शङ्खचक्रादि-धरश्श्रीनिवासो महाविष्णुः । लीलाविभूती रामकृष्णादिरूपेति विवेकः ।

वा—सर्वं जगदपि ईश्वरविभूतिरीश्वरव्यूहश्च ।

प्र—सत्यं, तथापि प्राधान्येनोक्तं तथा- 'आदित्यानामहं विष्णु'-रित्यादिवत् ।

वा—किमर्थं तथोक्तम् ?

प्र—उपासनार्थम् ।

वा—राम इव जीवोऽपि ब्रह्मबुद्ध्योपास्य एव ।

प्र—सत्यम् ।

वा—तथा सति जीववद्रामोऽपि नैव ब्रह्म ।

प्र—यदि रामशब्देन शरीरं विवक्षितं, तर्हि रामोपि जीवव-

दीश्वरशरीरत्वेन नैव ब्रह्म । यदि तदन्तर्गतं चैतन्यं विवक्षितं तर्हि रामो ब्रह्मैव ।

वा—तर्हि जीवशब्देनापि चैतन्यविवक्षणे जीवो ब्रह्मैव ।

प्र—सत्यं, यदि जीवान्तरचैतन्यं विवक्षितं जीवशब्देन, तर्हि जीवो ब्रह्मैव; यदि तु प्रत्यक्चैतन्यं विवक्षितं, तर्हि जीवो नैव ब्रह्म; किंतु ब्रह्मशरीरमेव ।

वा—रामो ब्रह्म, कृष्णो ब्रह्म, जीवो ब्रह्मेतिवत् श्वा ब्रह्म, श्वपचो ब्रह्मेत्यपि वक्तुं युक्तं, रामादिष्विव श्वादिष्वपि सत्त्वादीश्वरस्य ।

प्र—सत्यं, तथैव वदन्ति विद्वांसः सर्वं ब्रह्मेति । अत एव सर्वशब्दवाच्यत्वमपीश्वरस्य सङ्गच्छते । ईश्वरस्य सर्वशरीरकत्वेन शरीरवाचिसर्वशब्दानां शरीरिपर्यन्तत्वनियमात् ।

वा—तर्हि रामादिवच्छ्वादयोऽपि पूज्या एव, रामादिनामवद्देवदत्तादिनामान्यपि जप्यान्येव ।

प्र—मैवं; श्वादिदेहा जीवेश्वरसाधारणाः, ईश्वरवज्जीवस्याऽपि श्वादिदेहेषु सत्त्वात् । रामकृष्णादिदेहास्तु ईश्वरस्यैवासाधारणाः; तेषु जीवस्यासत्त्वात् । तथा रामकृष्णादिनामानीश्वरस्यैवासाधारणानि । देवदत्तादीनि तु जीवेश्वरोभयसाधारणानीति कृत्वा ईश्वरसाधारणदेहनामादय एव पूजाजपाद्युचिताः ।

वा—ब्रह्मरुद्रादयोऽपि पूज्या एव ।

प्र—पूज्या एव ते; जीवत्वेऽप्युत्कृष्टत्वात्, भगवद्भक्तत्वाच्च ।

वा—ब्रह्मरुद्रादयो न जीवाः ।

प्र—जीवा एव ?

वा—कुतः ?

प्र—वत्सापहारबाणासुरयुद्धादिषु ब्रह्मरुद्रादीनां श्रीकृष्णेन परिभूतत्वात् ।

वा—अतीतः कृष्णः कथमस्माकं सुसेवः ?

प्र—नातीतः, जगन्नाथक्षेत्रे जगन्नाथरूपेण वर्तत एव । यद्वा सर्वास्वप्यर्चासु सालग्रामादिषु च चैतन्यरूपेण वर्तत एव ।

वा—किं सालग्रामं परं ब्रह्म ?

प्र—ओम् ।

वा—कथम् ?

प्र—गण्डक्यां नद्यां परमेश्वरेण सालग्रामात्मनाऽवतीर्णत्वात् ।

वा—कथमिदं ज्ञायते ?

प्र—स्वाभाविकचक्रचिह्नेन । चक्रं हि भगवदसाधारणचिह्नम् ।

वा—तर्हि कुलालोपि भगवानेव, चक्रित्वात् ।

प्र—न, कृत्रिमत्वात्कुलालचक्रस्य ।

वा—तर्हि, कृत्रिमा अर्चा अपूज्या एव ।

प्र—न, कृत्रिमत्वेप्यर्चानां ब्राह्मणप्रयुक्तमन्त्रयन्त्रादिभिरीश्वरत्वात् । मन्त्राधीनं हि दैवतम् ।

वा—कथमीश्वरस्य परतन्त्रता ?

प्र—मन्त्राणामीश्वरेणैव तादृशसामर्थ्यस्य दत्तत्वात् । यद्वा सर्वव्यापिचैतन्यमेवाऽपरतन्त्रम् । रामकृष्णादिविभवास्तु मन्त्रादिपरतन्त्रा एव । त एव विभवा अर्चास्वावाह्य स्थाप्यन्ते भागवतैः । अथवा मन्त्रपूतास्वर्चासु भगवान्स्वयमेव भक्तानुग्रहार्थं वर्तते ।

वा—केन रूपेण ?

प्र—भक्तरक्षणोपयोगिना येन केनापि रूपेण ।

वा—तर्हि, बहिर्मुखा एव धन्याः ।

प्र—न, बहिर्मुखा अपि धन्याः ।

वा—कथमन्तर्मुखानामीश्वरसेवा; परोक्षत्वादीश्वरचैतन्यस्य ?

प्र—हृदि अंगुष्ठपरिमितपुरुषरूपेणेश्वरस्य सत्त्वात् । तस्य चाऽपरोक्षत्वात् ।

वा—कथमपरिच्छिन्नेश्वरस्यांगुष्ठपरिमितत्वम् ?

प्र—उपासकानुग्रहार्थमीश्वरेण तादृशरूपस्य स्वीकृतत्वाल्लीलया रामकृष्णादिमूर्तिवत् ।

वा—स पुरुषो नैव दृश्यते ।

प्र—चक्षुरविषयस्स मनसा दृश्यते ।

वा—किं मनोमयः ?

प्र—बाढम् ।

वा—मनसा कल्पित एव ?

प्र—न, ईश्वरेण गृहीतं तद्रूपं स्वयमेव ।

वा—कुतस्सर्वेषां तन्न प्रत्यक्षम् ?

प्र—मनश्शुद्ध्यभावात् ।

वा—किमेवमन्तर्मुखानां, बहिर्मुखानां वा साकार एवेश्वरस्संसेव्यः ।

प्र—सत्यं; निराकारस्य सेवितुमशक्यत्वात् ।

वा—साकारेश्वरसेवया न निराकारब्रह्मप्राप्तिः ।

प्र—यस्याकारस्सेव्यते, तस्य निराकारत्वादस्त्येव निराकारब्रह्मप्राप्तिस्साकारेश्वरसेविनः ।

वा—तर्हि व्यर्थो ज्ञानमार्गः ।

प्र—न व्यर्थः । य एवं ज्ञानपूर्वकं साकारमीश्वरं सेवते तस्यैव निराकारब्रह्मप्राप्तिर्नान्यस्येति ।

वा—'नान्यः पन्था विद्यतेऽयना'येति श्रुतिविरोधः ।

प्र—न, ज्ञानपूर्वकेश्वरसेवामार्गस्याऽपि ज्ञानमार्गत्वात् ।

वा—कथमीश्वरसेवा कार्या ?

प्र—'पापोहं पापकर्माहं पापात्मा पापसम्भवः । त्राहि मां कृपया देव शरणागतवत्सल' इत्यनुसन्धानपूर्वकम् ।

वा—केनोक्तम् ?

प्र—श्रीकृष्णेनैव ।

वा—क ?

प्र—गीतायाम् ।

वा—किं तद्वाक्यम् ?

प्र—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' । श्रीरामेणाऽप्युक्तम्- 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं म'मेति ।

वा—किमभेदेनेश्वरश्शरणीकरणीयः ? उत भेदेन ?

प्र—अभेदेनैव ।

वा—कथमभेदे शरणागतिः ?

प्र—ईश्वरशरीरत्वादीश्वर एवाहमिति निश्चयेनेश्वरश्शरणीकरणीयः ।

वा—कुतो न भेदेन ?

प्र—'योन्यां देवतामुपास्ते अन्योसावन्योहमस्मीति; न स वेद यदा पशुरेवं स देवाना'मिति श्रुत्या भेदस्य निन्दितत्वात् ।

वा—तर्हि शुद्धाभेद एवास्तु जीवेश्वरयोः ।

प्र—न ।

वा—कुतः ?

प्र—परिच्छिन्नापरिच्छिन्नयोर्बाह्यान्तरयोश्च जीवेश्वरयोश्शुद्धाभेदासम्भवात् ।

वा—यदि जीवः परिच्छिन्नः, यदि च जीवस्येश्वर आन्तरः, तर्हि नाहं ब्रह्मास्मि ।

इति बेल्लंकोण्डोपनामक रामकविकृतिषु 'अद्वैतविजये'
वादिप्रतिवादिसंवादः ।
साधारणमार्गशिरशुद्धनवमी ।



श्रीहयग्रीवाय नमः ।

# अथ सिद्धान्तः ।

प्रकृतिः पुरुष ईश्वरश्चेति त्रयः पदार्थाः; तत्र प्रकृतिरचेतना, सत्या नित्या दृश्या । ईश्वरशरीरतया ईश्वरात्मिका, ईश्वरशेषभूता अस्वतन्त्रा विभ्वी । सा द्विविधा सूक्ष्मा स्थूला चेति । प्रलयदशायामवस्थिता सूक्ष्मा; इयमेव मूलप्रकृतिरिति, ईश्वरशक्तिरिति च व्यपदिश्यते। प्रपञ्चदशायामवस्थिता स्थूला इयमेव भूतभौतिकाकारेणाद्य दृश्यते । ईश्वराधिष्ठिता सूक्ष्मप्रकृतिरेव स्थूलजगदाकारेण परिणतेति स्थूलप्रकृतेः परिणाम्युपादानं सूक्ष्मप्रकृतिः । प्रकृतेस्सत्त्वं रजस्तम इति त्रयो गुणास्सन्ति । तेन गुणत्रयेण प्रकृतिः पुरुषं संसारयति, पुरुषश्चेतनः सत्यः, नित्यः, द्रष्टा, दृश्यश्च । पुरुषस्य प्रकृतिं स्वं च प्रति द्रष्टृत्वमीश्वरं प्रति तु दृश्यत्वमिति विवेकः । ईश्वरशरीरकतया ईश्वरात्मकः, ईश्वरशेषभूतः, अस्वतन्त्रः, कर्ता, भोक्ता, अणुः, परिच्छिन्नज्ञानानन्दगुणकः । स त्रिविधः । बद्धः, मुक्तः, नित्यश्चेति । प्रकृतिस्थो बद्धः, प्रकृतिवियुक्तो मुक्तः, प्रकृत्या असंसृष्टस्तु नित्यः; त्रयोऽप्यमी प्रत्येकमनन्ता एव । जीवस्य स्थूलं सूक्ष्मं चेत्यस्ति शरीरद्वयम् । तत्र स्थूलं करचरणादिमत्पाञ्चभौतिकपिण्डः । सूक्ष्मंतु सूक्ष्मभूतपञ्चकप्राणपञ्चकज्ञानेन्द्रियपञ्चकमनोबुद्धिद्वयात्मकसप्तदशतत्त्वसमष्टिः सूक्ष्मशरीरसहित एव जीवो लोकान्तरगमनागमनादिकं करोति । इदं च सूक्ष्मशरीरमणु; तद्गतमन इन्द्रियादीनामणुत्वादत एव सूक्ष्मशरीरी देहादुत्क्रामन् जीवः पार्श्वस्थैर्नोपलभ्यते । प्रविशति च मशकादप्यतिसूक्ष्मं देहम् । एवमतिसूक्ष्मत्वादेव जीवोऽच्छेद्योऽदाह्योऽशोष्योऽमर्त्यश्च । प्राकृतं चेदं

सूक्ष्मशरीरं मुक्तिकाले नश्यति । स्थूलशरीरं तु प्रारब्धावसाने नश्यति । मुक्तनित्ययोस्तु स्वेच्छया ईश्वरेच्छया वा अप्राकृतस्थूलसूक्ष्मशरीरे स्तो नस्तश्च । अस्य च जीवस्य कामसङ्कल्पादयो गुणास्सन्ति । ज्ञातृत्वाचेतनधर्मा हि ते । चेतनश्च ज्ञाता; मनस्तु जीवस्य करणमेव । चक्षुरादिवत्; यथा दर्शनश्रवणादयो न चक्षुश्श्रोत्रादिकरणधर्माः; किंतु द्रष्टुश्श्रोतुश्च जीवस्यैव तद्वत्कामादयो न मनोधर्माः । अत एव—'शान्तो दान्त उपरत' इति श्रुत्या मुमुक्षोर्जीवस्य शमादयो गुणा विधीयन्ते । अणुरप्ययं जीवः देहे हृदि तिष्ठन् स्वप्रभया सर्वं देहमभिव्याप्य स्थितः, यथा सूक्ष्मोऽपि दीपः सर्वं गृहं प्रभया । अत एवास्य सर्वदेहस्थशैत्याद्युपलम्भः, इयमेव जीवप्रभाधर्मभूतं ज्ञानमित्युच्यते । ज्ञानमेव जीव इत्यद्वैतिनः । तदसत्— अहमिदं जानामीत्यनुभवाद्ज्ञातुरेव जीवत्वात्, ज्ञानवानेव ज्ञाता, नतु ज्ञानं ज्ञाता; ज्ञातृज्ञानज्ञेयानां परस्परं भेदात् । ज्ञातापि जीवस्सर्वं न जानातीति किंचिद्ज्ञ एव । नित्यमुक्तजीवौ तु सर्वज्ञौ तयोर्ज्ञानस्येश्वरानुग्रहेणापरिच्छिन्नत्वलाभात् । नित्यमुक्तौ परमपदे वैकुण्ठे वर्तमानौ निर्धूतनिखिलोपाधिकनिरतिशयब्रह्मानन्दमनुभवतः ईश्वरवत्; अत एव तयोरीश्वरसाम्यं श्रूयते । बद्धस्तु संसारी सुखं दुःखं चानुभवति परिच्छिन्नमेव तत्तज्जन्मसु कर्मप्रयुक्तेषु देवमनुष्यादिषु । तत्तच्छरीरसंयोगवियोगात्मकजन्ममरणे चानुभवति । स्वतस्तु जन्मादिषड्भावविकारशून्य एव पुरुषः । 'अत एवाजो नित्यश्शाश्वत' इति श्रूयते । यद्यपि प्रकृतिरप्यजैव । 'अजामेका'मिति श्रुतेः । तथाऽपि सूक्ष्मप्रकृतिरेवाऽजा, स्थूला तु देहेन्द्रियादिरूपा पृथिव्यादिरूपा च सादिरेव । अत एवानित्या च ।

इयं च स्थूलप्रकृतिस्सृष्टेः प्राक्सूक्ष्मप्रकृतिरूपेण वर्तत इति नासत्कार्यवादप्रसङ्गः । अयं च जीवः स्वभावतः प्रकृत्यसंसृष्टोपीश्वरमायामोहितत्वात्प्रकृतावहंममाभिमानवान्सन् प्रकृतिसंसृष्टो भवति । एतत्प्रकृतिसंसर्गकृत एवायं जीवस्य संसारः । प्रकृतिसंसर्गश्च जीवस्य द्विविधः । स्थूलप्रकृतिसंसर्गस्सूक्ष्मप्रकृतिसंसर्गश्चेति । देहस्थूलस्स्थूलप्रकृतिः, सूक्ष्मदेहस्सूक्ष्मप्रकृतिः । प्रलयेऽपि सूक्ष्मदेहसंसर्गोऽस्त्येवेति जीवस्य न तदा मुक्तिः । एवं सूक्ष्मदेहवन्तस्सर्वेऽपि जीवा बद्धाः, प्रलये अव्याकृतनामकेश्वरशक्तिभूतसूक्ष्मप्रकृतौ निलीय वर्तन्ते मधुपिष्टे स्वर्णरेणुवत् । तदानीं न तेषां किमपि ज्ञानं; तमोभिभूतत्वात्सुषुप्तिवत् । एवं जीवस्य कदाचिद्ज्ञानमुद्भवति, कदाचिन्नश्यति, कदाचित्संकुचति, कदाचिद्विकसतीति हेतोर्न जीवो ज्ञानं, किंतु ज्ञातैव । ईश्वरस्तु चेतनः, नित्यः, सत्यः, अजः, अनादिः, प्रकृतिपुरुषविलक्षणः, निखिलहेयप्रत्यनीककल्याणगुणैकतानः, अपरिच्छिन्नः, अपरिच्छिन्नज्ञानानन्दः, सर्वान्तर्यामी, प्रकृतिपुरुषशरीरकः, प्रकृतिपुरुषयोरण्यात्मेति परमात्मा । सर्वज्ञत्वसर्वेश्वरत्वसर्वशक्तित्वादिभिस्सर्वोत्कृष्ट इति पुरुषोत्तमः अदृश्यः, सर्वद्रष्टा, जीववत्करणानधीनज्ञानः, जीवो यथा ज्ञेयं मन आदिकरणैर्जानाति नतु तथा ईश्वरः । किंतु 'अपाणिपादो जवनो ग्रही'तेति श्रुतेः करणरहित एव वेत्ति सर्वम् । प्रकृतिपुरुषसंयोजनद्वारा सर्वजगदुदयविभवलयलीलः, सर्वशेषी, स्वानन्दानुभवशाली, सङ्कल्पधृतविराड्विष्णुरामकृष्णादिबहुरूपतया दृश्यः, मुक्तजीवोपभोग्यः, सर्वशासितृत्वेन सर्वभयहेतुः, कार्यकरणप्रवर्तकत्वेन सर्वसुहृत्, मुक्तिप्रदत्वेन भक्तानामभयहेतुः, जीववदयमपि ज्ञातैव, न ज्ञानमात्रं । नच 'सत्यं ज्ञान-

मनन्त'मिति श्रुतिविरोधः । ज्ञानस्य स्वरूपनिरूपकधर्मत्वेनेश्वरस्य ज्ञानमिति व्यपदेशः जीवस्य च । ज्ञानवत्त्वस्य जीवेश्वरलक्षणत्वात् । ईश्वरस्य ज्ञानन्तु न संकोचादिविकारान्भजते तम आद्यनभिभूतत्वात् । कामसङ्कल्पादय ईश्वरस्यापि स्वधर्मा एव । 'तदैक्षतेत्या'दिश्रुतेः । नतु प्रकृतिधर्माः, जडत्वात्तस्याः । नापि मायाधर्माः, प्रकृतेरेव मायापदार्थत्वात् । यद्वा ईश्वरसङ्कल्पस्यैव मायात्वात् । 'माया साङ्कल्पिकज्ञान'मिति निघण्टुदर्शनात् । अमोघसङ्कल्पवत्त्वादेवायं मायीत्युच्यते । प्रकृतिपुरुषविशिष्टोऽपि नित्यमुक्तोयं जीवस्यात्मभूतोपि परोक्षः शास्त्रानुमानादिना गम्यः । तच्च शास्त्रमीश्वरकृतमेव- 'तस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेद' इति श्रुतेः । 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाह'मिति गीतावचनाच्च । अयं चेश्वरो हृदयर्चायां सूर्ये वा य आत्मानं भक्त्या सेवन्ते तेभ्यो मुक्तिं दिशतीति भक्तिमार्ग एव साक्षान्मोक्षनदः । मोक्षः परमपदप्राप्तिः । सच परमपदं गतो न पुनरावर्तते । ब्रह्मरुद्रादिलोकान् गतास्तु पुनरावर्तन्ते । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति गीतावचनात् । जीवस्येश्वरसाम्यापत्तिरेव, न तु सायुज्यप्राप्तिः । सति सायुज्ये जीवस्य स्वरूपनाशप्रसङ्गेन सायुज्यस्यापुरुषार्थत्वान्नित्यस्य जीवस्य नाशायोगाच्च । परमपदं प्रविष्टश्च मुक्तः अप्राकृतदिव्यमङ्गलविग्रहश्शङ्खचक्रादिधारी सन् तथाविधैरेव मुक्तैर्नित्यैश्च सूरिभिस्साकं लक्ष्मीविशिष्टं श्रीमहाविष्णुं सेवमानः परब्रह्मानन्दमनुभवन्वर्तत इत्येष प्रतिवादिदर्शनसारसंग्रहः ।

वादिमतं तु मया वेदान्तदीपिकादिषु स्फुटं प्रदर्शितमेव । अपरिच्छिन्नस्सत्यज्ञानानन्दरूप ईश्वर एव जीव इति । अत्र विचार्यते—

किं जीवः परिच्छिन्न उतापरिच्छिन्नः ? किमीश्वर एव जीवः ? यद्वे-श्वरस्य शरीरं जीवः ? किं ज्ञानमेवेश्वरो जीवश्च उत ज्ञाता ? किं मुक्तजीवस्य ब्रह्मसाम्यमुत ब्रह्मसायुज्यम् ? किं ज्ञानादेव कैवल्यमुत भक्तेः ? किमनन्यशेषस्सर्वशेषी च जीवः ? यद्वा ब्रह्मणश्शेषः ? इत्यादिः।

तथाहि; जीवः परिच्छिन्न एव; अतिसूक्ष्मदेहेऽपि सत्त्वात् । यद्यपि विभोरपि गगनस्येव सूक्ष्मेपि सत्त्वं भवितु मर्हति, तथापि विभु-र्देहाद्बहिरपि वर्तेत; नतु जीवो देहाद्बहिर्वर्तते गगनवत् व्यापित्वमीश्वर-स्यैव । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुतेः । नारायणोह्यन्तर्यामी, न लीयन्ते न क्षीयन्त इति नरा जीवास्तेषां समूहो नारं तस्यायनं प्रवृत्तिर्यस्मात्स नारायण इति व्युत्पत्तेरन्तस्स्थित्वा यमयति जीवानित्यन्तर्यामीति व्युत्पत्तेश्च अन्तर्यामित्वं चेश्वरस्यैवासाधारणो धर्मः । 'य आत्मनि तिष्ठ'न्नित्यन्तर्यामिब्राह्मणात् । 'केनापि देवेन हृदि स्थितेन यथा नियुक्तोस्मि तथा करो'मीति पुराणात् । 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'तीति स्मरणात् । जीवपारतन्त्र्यस्यानुभवसिद्धत्वाच्च । इति पूर्वपक्षः ।

न जीवः परिच्छिन्नः, परिच्छिन्नत्वे जीवस्य घटादिवदनित्यत्वा-पत्तेर्जडत्वापत्तेश्च । नच परिच्छिन्नोपि जीवो निरवयवत्वात्परमाणुवन्नित्य इति वाच्यं, नित्यपरमाणुसद्भावे मानाभावात् । ब्रह्मातिरिक्तस्य नित्यवस्तुन एवाभावात् । 'तत्सत्यमतोन्यदार्त'मिति श्रुतेः । सत्यस्यैव नित्यत्वाच्च । एवं जीवस्य नित्यत्वादेव ब्रह्माभेदस्तत एवापरिच्छिन्नत्वं च । ब्रह्म ह्यपरिच्छिन्नम् । नच देहाद्बहिर्घटादौ जीवो नास्तीति वाच्यं, तत्रापि जीवसत्त्वात् । ननु तर्हि कुतो घटादौ जीवस्याहंग्रहा-

भाव इतिचेत्तत्रान्तःकरणाभावात् । यत्रान्तःकरणमस्ति तत्राहमिति स्फुरत्यात्मा । अतएव सुषुप्तौ देहेऽन्तःकरणाभावादहमित्यस्फुरणमात्मनः । ननु यदि जीवो घटेऽपि स्यात्तर्हि देहवद्धटोपि चेतनस्स्यात्, देहजन्ममरणाभ्यामिव घटजन्मनाशाभ्यामपि घटो जातो मृत इति व्यवहारस्स्यादिति चेन्मैवम्—घटे जीवसद्भावस्तथाऽऽस्ताम् । व्यापिनश्चेतयितुरीश्वरस्य घटेऽपि सत्त्वात्कुतो न घटस्य चैतन्यलाभः ? कुतो वा घटोदयनाशाभ्यामीश्वरस्य जन्मनाशव्यवहाराभावः ? तस्माद्देहस्य सूक्ष्मदेहसम्बन्धप्रयुक्तमेव चेतनत्वं, न जीवेश्वरसम्बन्धप्रयुक्तं; । न चेतयिता जीव एवेति वाच्यं, अन्तःकरणस्यैव चेतयिता जीवः, तस्यैवेश्वरचैतन्यप्रतिफलनग्रहणसमर्थत्वात् । तस्मादन्तःकरणं वस्तुतो जडमपि चैतन्याभासाच्चेतनमिव भवति । अत एवान्तःकरणस्याहंग्रहलाभः अहं सुखीत्यादिव्यवहारात्, देहादिकं त्वचेतनमेव । स्थूलोहं मनुष्योहमिति व्यवहारस्तु देहतादात्म्याध्यासादन्तःकरणस्यैव, इदं साभासमन्तःकरणं यत्रास्ति स देहश्चेतन इति, स जीव इति च व्यवह्रियते । यस्मादिदमुत्क्रान्तं स देहस्तु निर्जीव इति व्यवह्रियते । अयं जीव इदमन्तःकरणमिति विवेकाभावाल्लोकस्य अन्तःकरणधर्माणां सुखादीनां जीवधर्मचैतन्यस्य च परस्परमध्यासेन जीवान्तःकरणयोरविवेको जातः । तत एवाहं सुखीति प्रत्येति जीवोप्यन्तःकरणतादात्म्याध्यासात् । यथा देहतादात्म्याध्यासादहं मनुष्य इति । अत एवास्य जीवस्य परिच्छिन्नोहं न देहाद्बहिर्वर्ते । इत्यनुभवः । अन्तःकरणं हि परिच्छिन्नं देहान्तरं च । ननु कथमपरिच्छिन्नस्येश्वरस्यैव जीवस्य अन्तःकरणादितादात्म्याध्यास इति चेन्नैष दोषः—मायया तदुपपत्तेः । अत्यन्तदुर्घटमपि घटयति हि माया गग-

नादेर्नैल्यादिकमिव । नन्वेवमपरिच्छिन्नेश्वरं परिच्छिन्नजीवीकरोति मायेति मायापारतन्त्र्यमीश्वरस्य प्राप्तमीश्वराभावश्चेति चेन्मैवम्—मायया गगने नीलीकृते सति किं गगनस्य नैल्यं प्राप्तं, किं वा नीरूपगगनाभावः प्राप्तः ? तस्मादीश्वरे माया जीवत्वं जगद्वा निर्मातु, न तावता कोपि जीवत्वादिरीश्वरस्य भवेत् ; नाऽपीश्वरत्वमपेयात् । तस्मान्मायासृष्टपरिच्छिन्ननानान्तःकरणतादात्म्याध्यासादेवापरिच्छिन्नैकेश्वरस्य परिच्छिन्ननानाजीवत्वव्यवहार इति मायामयमेव जीवस्य परिच्छिन्नत्वं नानात्वं च, वस्तुतस्त्वपरिच्छिन्नेश्वर एव जीवः । ईश्वरचैतन्यपरिच्छेदकानामन्तःकरणानां मायासृष्टत्वेन मायामयत्वाद्वस्तुतस्तदभावाच्च । अत एव- 'ह्येकमेवाद्वितीयं ब्रह्मे'ति श्रूयते । 'नेह नानास्ति किंच'नेति च । नच माया सत्यैवेति वाच्यं, या मा सा मायेति निरुक्त्यैव तस्या असत्यत्वसिद्धेः । नचेश्वरस्य सत्यत्वे कथं तच्छक्तेर्मिथ्यात्वमिति वाच्यं, अग्नेस्सत्यत्वेपि तच्छक्तेर्मिथ्यात्वात् । सदसदनिर्वाच्या हि शक्तिः । नन्वेवं मुक्तिदशायां मायाभावेन सर्वद्वैताभावात्तदानीमपरिच्छिन्नो भवतु जीवः; इदानीं तु सर्वसत्त्वात्परिच्छिन्न एव, इति चेन्मैवम्—जीवस्याऽविकार्यत्वेन सदैकरूपत्वात्सर्वदाऽप्यपरिच्छिन्न एव जीवः; तस्य परिच्छिन्नत्वं तु भ्रान्तिसिद्धमेवेति । ननु यदान्तरं तज्जीवचैतन्यं, यद्बाह्यं तदीश्वरचैतन्यमिति भेद एव जीवेश्वरयोरिति चेन्मैवम्—चैतन्यमेकमेव, गगनवत् ; तस्योपाधिकृत एवान्तरत्वबाह्यत्वभेदः, न स्वाभाविक इति । ननु यद्यपरिच्छिन्नो जीवस्स्यात्तर्हि एक एव स्यात्, न चेष्टापत्तिःसुखदुःखाद्यनुभववैचित्र्यस्य दुरपलापत्वादिति चेन्मैवम्—सुखदुःखादयस्सर्वे अन्तःकरणधर्मा एव; ते च नानेति न देवदत्तान्तः-

करणानुभूतसुखादेर्यज्ञदत्तान्तःकरणस्मरणप्रसङ्गः । नच सुखादयो जीव-धर्मा एवेति वाच्यं, सुषुप्तावन्तःकरणाभावेन जीवसत्त्वेपि जीवस्य सुखा-द्युपलम्भाभावात् । नचैवं सुखादीनां कामादीनां च मनोधर्मत्वे ज्ञान-स्यापि मनोधर्मत्वाद्‌ज्ञानशून्य एव जीवो जडस्स्यादिति वाच्यं, सुख-कामादिवृत्तिज्ञानानां मनोधर्मत्वेऽपि जीवो न जडः, ज्ञानस्वरूपत्वात् । तद्धि जीवस्य स्वरूपभूतज्ञानं नित्यं, स्वप्रभं, सर्वावभासकं, सदैकरूपं, सर्वव्यापि, सर्वान्तरं, सर्वोपाधिविनिर्मुक्तं च । एवं सर्वावभासकत्वादेव ज्ञानस्वरूपोऽपि जीवस्सर्वज्ञ इति ज्ञातृत्वेन व्यपदिश्यते । ज्ञातुरेकत्वं च श्रुत्यैवोक्तं- 'नान्योतोस्ति द्रष्टा' इति । नच ज्ञातुर्जीवस्यान्तरः कश्चिदन्तर्यामी ज्ञातास्तीति वाच्यं, तस्याप्यन्तः कश्चिद्‌ज्ञाता पुनरस्ती-त्यनवस्थादोषप्राप्तेः । अन्तर्यामिणस्सर्वान्तरत्वेन तस्यापि ज्ञातृत्वे ज्ञातृ-धर्मस्य ज्ञानस्य ज्ञात्रन्तर्गतत्वेन ज्ञानस्यैव सर्वान्तरत्वं स्यात् । इष्टापत्तौ अन्तर्यामिणस्सर्वान्तरत्वहानिः, ज्ञातृभूतजीवेश्वरोभयानुगतचैतन्यरूपज्ञान-स्यैव ब्रह्मत्वमित्यद्वैतसिद्धिश्च । तस्माद्‌ज्ञातुरात्मनस्स्वरूपमेव ज्ञानं; नतु धर्मः । नच स्वरूपज्ञानं न सर्वावभासकमिति वाच्यं, सुषुप्तिमूर्छा-दिषु स्वरूपज्ञानस्य भासकत्वसिद्धेः । कथमन्यथा असाक्षिकसुषुप्तिमूर्छा-द्यभ्युपगमः? नच सुषुप्त्यादिषु जीवस्य ज्ञानभाव एवेति वाच्यं, किं जीवस्स्वस्य सुषुप्तौ ज्ञानाभावं स्वयं वेद, उत न वेद? आद्ये सिद्धं जीवस्य ज्ञानम् । द्वितीये- कथमसाक्षिकज्ञानभावाभ्युपगमः? अपि च सुषुप्त्यादिषु वृत्तिज्ञानाभाव एवान्तःकरणाभावात् । चैतन्यन्त्वस्त्येव, तस्य नित्यस्याभावप्रतियोगित्वाभावात् । ननु यदि जीवस्य सुषुप्तावपि ज्ञानमस्त्वति, तर्हि ज्ञानाश्रय एव जीवः; नतु ज्ञानमिति चेन्नैवम्—

जीवस्सुषुप्तिमवभासयतीति मयोच्यते, नतु ज्ञानमस्तीति; कस्मा अवभासयतीति चेत्त्वस्मा एवेति विद्धि । तद्यवभासको ज्ञाता, अवभासनं ज्ञानं, अवभास्यं ज्ञेयं सुषुप्तिश्चेति सिद्धैव त्रिपुटी सुषुप्तौ । एवं प्रलयादिष्वपीति कथमद्वैतसिद्धिः ? उच्यते– सुषुप्तिदशायां नास्ति त्रिपुटी । अहमिदं जानामीति भेदानुभवाभावात् । 'यत्र सर्वमात्मैवाभूत्तत्र केन कं पश्ये'दित्यादिश्रुतेश्च । किंतु निर्विकल्पकानुभवमात्रमेवास्ति; यद्बलात्सुषुप्त्यभ्युपगमः । नचानुभवो जीव एवेति, यद्वा सुषुप्तावज्ञानानुभवसत्त्वादस्तु नाम त्रिपुटी; मुक्तौ तु न त्रिपुटी । आत्मातिरेकेण यस्य कस्यापि वस्तुनोऽभावात् । नच मुक्तावात्मा ब्रह्मानन्दमनुभवतीति त्रिपुट्यस्त्यैवेति वाच्यं, ब्रह्म तदानन्दस्तद्भोगस्तद्भोक्ता चेति नास्ति विविच्य पदार्थचतुष्टयं तु मुक्तौ; किंतु जीवो ब्रह्मरूपेणास्तीत्येवोच्यते । तच्च ब्रह्मैवानन्दमिति, अनुभवरूपमिति च सिद्धान्तान्न द्वैतप्रसङ्गः । नचैवमेकस्यैव भोक्तृत्वं भोग्यत्वं चेति कर्मकर्तृभावविरोध इति वाच्यं, यथा तव मते ब्रह्मैव स्वानन्दमनुभवतीत्यत्र कर्मकर्तृभावविरोधस्य परिहारः, तथैव मम मतेऽपीति । अस्तु मम मते स दोषः; तव मते कथं तत्परिहार इति चेदुच्यते—मुक्तो ब्रह्मानन्दमनुभवतीत्यस्य मुक्तो ज्ञानानन्दब्रह्मस्वरूपेण तिष्ठतीत्येवार्थ इति । अत्र प्रमाणं तु- 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतिरेव । ननु जीवेश्वरभेदकयोरल्पज्ञत्वसर्वज्ञत्वयोः परिच्छिन्नत्वापरिच्छिन्नत्वयोस्संसारित्वासंसारित्वयोर्दुःखित्वानन्दमयत्वयोः प्रत्यक्षत्वपरोक्षत्वयोर्जगदहेतुत्वहेतुत्वयोः पारतन्त्र्यस्वातन्त्र्ययोश्च सर्वानुभवसिद्धयोः कथमपलापश्शक्यते कर्तुमिति, चेदुच्यते– यस्यान्तःकरणतादात्म्याभिमानस्तस्याज्ञस्यैवानुभवसिद्धमिदं भेदकजातं; नतु प्राज्ञस्य । प्राज्ञो

हि सर्वज्ञमपरिच्छिन्नमसंसारिणमानन्दं प्रत्यक्षं जगद्धेतुं स्वतन्त्रमीश्वर-मेवात्मानं मन्यते । नच कथं परोक्षेश्वरस्य प्रत्यक्षत्वमिति वाच्यं, यावज्जीवस्यात्मनि संसारिबुद्धिस्तावदेव जीवस्य परोक्ष ईश्वरः । यदा तु जीवस्य स्वस्वरूपज्ञानं तदा प्रत्यक्ष एवेश्वरः; जीवस्यैवेश्वरत्वात् । 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतेः । 'स आत्मा तत्त्वमसी'ति श्रुतेश्च । नच जीवस्य शरीरस्यात्मा शरीर्येवेश्वर इति वाच्यं, जीवस्य निरवयवस्य ईश्वरशरीरत्वायोगात् । सावयवं हि शरीरं, नच गगना-दयो निरवयवा ईश्वरशरीरमेवेति वाच्यं, गगनादीनां सर्वेषामपि सादि-वस्तूनां सावयवत्त्वाद् । नच प्रकृतिर्निरवयवेति वाच्यं, तस्यास्सावय-वत्वनिरवयवत्वाभ्यां दुर्निरूपत्वात् । नचेश्वरभोग्यत्वाज्जीव ईश्वरशेष एव, नेश्वर इति वाच्यं, जीवभोग्यत्वादीश्वरस्यापि जीवशेषत्वप्रसङ्गात् । मुक्तैरीश्वरो भुज्यते, तव मतेनापि न चेश्वरपरतन्त्रो जीव इति वाच्यं, देहेन्द्रियादिसङ्घातस्यैव पारतन्त्र्यं, नतु जीवस्य केवलस्येति । नच जीवानीश्वरो यमयतीति वाच्यमन्तःकरणतादात्म्याभिमानिन एवाज्ञानी-श्वरो यमयति; नतु प्राज्ञमात्मानम् । नचान्तःकरणस्य जडस्य कथ-मीश्वरनियमनमिति वाच्यं, साभासत्वेनाजडत्वात्तस्य । नचेश्वराज्जीवा बिभ्यतीति वाच्यमज्ञा एव बिभ्यति, नतु प्राज्ञः । नहि सुषुप्तिमूर्छादिषु प्राज्ञस्य सतोजीवस्य कापीश्वराद्भीतिः किमपि नियमनं पारतन्त्र्यंवा विद्यते। एवं तत्त्वविदपि न बिभेति । नच प्राज्ञस्य मूढत्वादभीतिरिति वाच्यं, प्रज्ञ एव प्राज्ञ इति व्युत्पत्त्या प्राज्ञस्य सर्वज्ञत्वात् । नच यः किंचिदपि न वेद स सुषुप्तिस्थः, प्राज्ञः कथं सर्वज्ञ इति वाच्यं, यस्मात्प्राज्ञः किंचिन्न वेद तस्मादेवं सर्वं वेदेति । नचैवं घटोपि सर्वज्ञ एवेति वाच्यं, इष्टा-

पत्तेः- घटावच्छिन्नं चैतन्यं हि सर्वज्ञम् । घटः किमिति न सर्वज्ञ इति चेद्ज्ञानस्वरूपत्वाभावादिति जानीहि । प्राज्ञो ज्ञानस्वरूपः, घटस्तु जडस्वरूप इत्यत्र किं मानम्? घटस्य दृश्यत्वात्प्राज्ञस्य द्रष्टृत्वाच्चेति हेतुः । कथं प्राज्ञस्य द्रष्टृत्वम्? सुषुप्तिसाक्षित्वात् प्राज्ञोपि दृश्यत एव । न, येन प्राज्ञो दृश्यते तस्य द्रष्टुरेव प्राज्ञत्वात् । अन्तर्यामिणा प्राज्ञो दृश्यते; न, अन्तर्यामिण एव प्राज्ञत्वात्, तस्माद्द्रष्टा स्वयंप्रकाश आत्मा जीव ईश्वर एक एव सत्यः । दृश्यमन्यत्सर्वमसत्यमेव, दृश्यत्वादेव । ननु यद्यदृश्यं ब्रह्म तर्हि कथं तद्ज्ञाने मुमुक्षूणां प्रवृत्तिः? कथं वा तत्साक्षात्कारः? 'दृश्यते त्वग्र्यया बुद्ध्ये'ति कथं श्रुत्युपपत्तिरिति चेदुच्यते—दृश्यत एव ब्रह्म स्वेन; स्वप्रकाशत्वादन्येन तु न दृश्यते । जीवस्य तु ब्रह्मानन्यत्वाज्जीवेन ब्रह्म दृश्यत एव, स्वस्य स्वयं हि सदाप्यपरोक्षः । बुद्ध्या दृश्यत इति श्रुतिस्तु बुद्ध्युपहितेन जीवेन दृश्यत इत्यभिप्रायगर्भा; यद्वा बुद्धावेकाग्रायां सत्यां जीव आत्मानं साक्षात्कुरुत इति । नच स्वसाक्षात्कारं प्रति कुतो जीवस्य बुद्ध्यपेक्षेति वाच्यं, इतः प्राग्बुद्धिविक्षेपवशाज्जीव आत्मानं संसारिणमज्ञमीश्वरभिन्नं च ज्ञात्वा खिन्न इतीदानीं बुद्धिशुद्धिरपेक्षिता जीवेन । बुद्धिनैर्मल्याज्जीवस्यानात्मतादात्म्याभिमाननाशे सति स्वस्वरूपसाक्षात्कारो भवतीत्यर्थः । तस्माद्येन ब्रह्म दृश्यते, स एव ब्रह्मेति । द्रष्टैव ब्रह्म, नतु दृश्यम् । तच्च जीव एव, जीवस्यैव ब्रह्मद्रष्टृत्वात् । घटादिकं तु दृश्यमेव, नतु द्रष्टृ । दृश्यं द्रष्टृ चेति पदार्थद्वयमेव माया, तत्कार्यं सर्वं जगद्दृश्यं, द्रष्टृ तु ब्रह्म; तच्च दृग्रूपं जीव ईश्वरश्च ब्रह्मैव; दृग्रूपत्वाज्जीवस्येश्वरस्य च । दृक्च ज्ञानं चैतन्यमित्यर्थान्तरम् । ज्ञानं

चापरिच्छिन्नमेव, ज्ञानेन ज्ञेयस्यैव परिच्छिद्यमानत्वात् । ज्ञानस्य ज्ञानान्तरेण परिच्छेदवादे अनवस्थादोषात्; ज्ञानस्यापि ज्ञेयत्वापत्तेश्च । अत एव ज्ञानमेकं घटपटादिविषयभेदेऽपि ज्ञानाभेदात् । अत एव सत्यं नित्यं चेति कथं ज्ञानस्वरूपस्य जीवस्य परिच्छिन्नत्वं नानात्वं वा ? तस्मादपरिच्छिन्न ईश्वर एव जीवः; ईश्वरस्यापि तस्य जीवत्वं भ्रान्ति-सिद्धमेव । रज्जोस्सर्पत्वमिव, भ्रान्तिहेतुस्तु मायैव, सा चात्मतत्त्वसाक्षा-त्कारान्नश्यति । सति तु मायानाशे सर्वद्वैतनिवृत्तिरिति शिष्यत एक-मेव ब्रह्म । तच्चाशेषं सत्येवमद्वैते कथं मुक्तस्येश्वरसाम्यापत्तिः । न कथमपीति, मुक्तस्य ब्रह्मसायुज्यमेव ।

इति, बेल्लंकोण्डोपनामक रामकविकृतिषु

अद्वैतविजये—सिद्धान्तः ।

( साधारणमार्गशिरशुद्धदशमी । )



